वज्रोदरी तापिनी च ज्वालाजालंधरी तथा ।
व्यात्तानना घोररावा जिह्वाललनभीषणाः ॥
वसासृङ्मांससंपूर्णकपालासिकराः स्मृताः ।
एता दलाग्रे संपूज्याः षष्ठावरणके क्रमात् ॥
लोकपालाश्च सम्पूज्या बहिर्दशसु दिक्ष्वपि ।
स्वस्वायुधासक्तकराः स्वस्ववाहनसंयुताः ॥
सप्तावरणमेतत्ते कथितं भक्तितत्परे ।
देव्याः कामकलाकाल्याः समन्त्रा ध्यानपूर्व्वकम् ॥
एवं पूर्व्वोक्तरूपान्तां संपूज्य परमेश्वरीं ।
योगिनीचक्रसहितां भैरवेण समन्वितां ॥
ततश्च यत्नतः कान्ते वलिं सम्प्रतिपादयेत् ।
बलिमुत्साय्यं नैवेद्यं नैऋत्यां दिशि चोत्सृजेत् ॥
हृदये चैव देवीन्तां संस्थाप्य विधिवत्पुनः ।
निर्म्माल्यं च शुचौ देशे धारणीयं शिरस्यपि ॥
अतः परम्प्रवक्ष्यामि पौरश्चरणिकं विधिं ।
एकस्मिन्यत्र विहिते सिद्धिस्तात्कालिकी भवेत् ॥
भूमिशुद्धिर्द्रव्यशुद्धिः पुरैव कथिता मया ।
यमाश्च नियमा ये स्युः पुरश्चरणकर्म्मणि ॥
सर्व्वानेव प्रयुञ्जीत सततं भक्तितत्परः ।
कृतनित्यक्रियः प्रातः कृतपूजाविधिः शुचिः ॥
नारास्थिनिखनेद्भूमावमुं मंत्रमुदीरयन् ।
तारक्रोधार्णह्रीपाशस्मरभूतान्समुद्धरन् ॥
सिद्धिमुच्चार्य्य देहीति युग्मं वह्निवल्लभां वदेत् ।
तदुपर्य्येव चास्तीर्य्य स्वासनं सुष्ठु कल्पितं ॥

नृमुण्डमग्रतः कृत्वा नरास्थिजपमालया ।
लक्षमे [७ ब] कं जपेन्मंत्री हविष्याशी दिवा शुचिः ॥
अशुचिश्च तथा रात्रौ लक्षमेकं तथैव च ।
दशांशं होमयेन्मत्री तर्प्पयेदभिषेचयेत् ॥
होमसन्तर्प्पणे चैव पूजावत्कथितो विधिः ।
पूजायां वा प्रयोगे वा होमे वा तर्प्पणे थवा ॥
गुह्यकालीविधानेन सर्व्वं कार्य्यं शुचिस्मिते ।
अत्रानुक्तम्विधानं यत्तत्रत्यं तत्प्रकल्पयेत् ॥
तत्राप्यनुक्तं यत्किञ्चित्तत्रोक्तो दक्षिणा विधिः ।
एतत्ते सर्व्वमाख्यातं समासेन वरानने ॥
देव्याः कामकलाकाल्याः पूजाविधिरनुत्तमः ।
अतः परं प्रयोगांस्ताम्वक्ष्यामि प्रयता शृणु ॥
स्नातः शुक्लांवरधरः कृतनित्यक्रियो दिवा ।
रात्रौ नग्नः शयानश्च मैथुने च व्यवस्थितः ॥
अथवा मुक्तकेशश्च प्रजपेदयुतं नरः ।
भवन्ति तत्क्षणाद्देवि तेन सर्व्वार्थसिद्धयः ॥
स्तंभनं मोहनं वापि वशीकारो विशेषतः ।
यद्यदिच्छति तत्सर्व्वं साधयेदविचारयन् ॥
नग्नां परस्त्रियम्वीक्ष्य प्रजपेदयुतं सुधीः ।
स भवेत्सर्व्वविद्यानां पारगः सर्व्वदैव हि ॥
तस्य दर्शनमात्रेण वादिनो निः प्रभा मताः ।
गद्यपद्यमयी वाणी सभायान्तस्य जायते ॥
अथवा मुक्तकेशोसौ हविर्ह्यं भक्षयन्नरः ।
अष्टोत्तरशतञ्जप्त्वा भगमामंत्र्य यत्नतः ॥

मैथुनं यः प्रकुर्व्वीत धनधान्यसमन्वितः ।
सर्व्वविद्यावतां श्रेष्ठः स भवेन्नात्र संशयः ॥
ऋतुमत्या भगं पश्यन्प्रजपेदयुतत्रयः ।
अनर्थितापि तद्वाणी गद्यपद्यमयी भवेत् ॥
छन्दोवद्धा परन्तस्य वाणी वक्त्रात्प्रजायते ।
सुरतेषु च जप्तव्यम्महापातकमुक्तये ॥
धनागमाय च तथा परयोषासमागमे ।
यदि नो योषितः सङ्गस्तदारेतः प्रयत्नतः ॥
समुत्सार्य्यं जपं कुर्य्यात्सर्व्वकामार्थसिद्धये ।
तत्रैव रति [८क] मारभ्य यो जपेन्मन्त्रवित्तमः ॥
अयुतं मैथुनी भूत्वा मंत्रजप्यपरायणः ।
स याति परमां सिद्धिं देवेनापि सुदुर्ल्लभां ॥
आकर्षणवशीकारौ मारणोच्चाटने तथा ।
स्तंभनं मोहनञ्चैव वृद्धेः सन्त्रासनन्तथा ॥
करोति तत्क्षणादेव नात्र कार्य्या विचारणा ।
वाग्मित्वञ्च धनित्वञ्च बहुपुत्रत्वमेव च ॥
न जरा न च रोगो वा न च मृत्युर्न वा भयं ।
न च त्रासो मनुष्येभ्यो न च वाक्कायपालनम् ॥
अथवा स भवेन्नित्यं चतुर्व्विंशतिसिद्धिभाक् ।
स्वदेहरुधिराक्तैश्च विल्वपत्रैः सहस्रशः ॥
श्मशानेभ्यर्च्चयेद्देवीं वागीश समतां व्रजेत् ।
रेतो युक्त जवापुष्पैः करवीरस्य वा प्रिये ॥
श्मशानेभ्यर्च्चयेद्देवीं सर्व्वसिद्धिं स विन्दति ।
धनवान्वलवान्वाग्मी सर्व्वयोषित्प्रियो भवेत् ॥

सुखी स्यान्नात्र सन्देहो महाकालवचो यथा ।
श्मशाने योषितं वीजैर्म्मर्व्येभ्यर्च्च्य सहस्रशः ॥
रक्तचन्दनदिग्धांगीं रक्तपुष्पैरलंकृताम् ।
पूजयित्वा भगं वीक्ष्य ततो ध्यायेत कालिकां ॥
सद्यो हि लभते राज्यं यदि सा न भयायते ।
मेषमाहिषमांसेन वाग्मित्वं तस्य जायते ॥
श्मशाने शयने चैव शवासनगतः पुमान् ।
असकृच्च जपेन्मन्त्रं सर्व्वसिद्धिफलप्रदं ॥
तर्प्पयेत्तां श्मशाने तु रक्तमांसादिभिस्त्रिधा ।
त्रिस्त्रिर्म्मनुमुदीर्य्यैवं सर्व्वसिद्धिर्भवेद्ध्रुवं ॥
रेतोभिश्च तथा तद्वत्स्वकीयेन वरानने ।
मैथुनायितयोषाया भगप्रक्षालनोदकैः ॥
मेषमाहिषरक्तेन नररक्तेन [८ ख] चैव हि ।
उन्दुरोलूकरक्तेन वाग्मिता तस्य जायते ॥
धनित्वं जायते तस्य सर्व्वसिद्धिः प्रजायते ।
वचसा स भवेज्जीवो धनेन च धनाधिपः ॥
आज्ञया देवराजोसौ रूपेण च मनोभवः ।
वलेन पवनो ह्येष सर्व्वतश्चार्थसाधकः ॥
पक्वापक्वं हि यन्मांसं सास्थि दद्यात्सदा वलिं ।
मूषमार्ज्जारराजमांसं मेषमाहिषसंभवं ॥
सर्व्वं सास्थि प्रदातव्यं तदा लोमसमन्वितं ।
स्ववीर्य्यं स्वनखं छिन्नं केशं संमार्ज्जनागतं ॥
निवेदयेत् श्मशाने तत्सर्व्वसिद्धिं स विन्दति ।
नारीरजोन्वितं कृत्वा पर्णानां शतमुत्तमम् ॥

प्रत्येकं प्रजपेन्मंत्रं ततस्तद्धोमयेद्बुधः ।
युगानामयुतन्तेन मान्मथी पूजिता भवेत् ॥
सर्व्वसिद्धिर्भवेत्तस्य वाग्मी धीरश्च जायेत ।
न तस्य दुर्लभं किंचित्पृथिव्यां जातु विद्यते ॥
योनिनिरूपं हि कुण्डं वै कृत्वा वैतस्तिमानतः ।
हस्तविस्तारतः कृत्वा हस्तं चापि तथा अधः ॥
तत्र कार्य्या हि मंत्रेण वहिःस्थापनिकाः क्रियाः ।
संहारभैरवायादौ दद्यात्प्रथममाहुतिं ॥
रुरुमांसेन साज्येन भक्तेन रुधिरेण च ।
कृष्णपुष्पेण साज्येन सरक्तेन विशेषतः ॥
आमिषादिभिरप्येवं श्मशाने जुहुयात्सुधीः ।
स्नातः शुक्लांबरधरः शुचिः प्रयतमानसः ॥
दिवा चैवं प्रकर्त्तव्यं सर्व्वकामार्थसिद्धये ।
रात्रौ नग्नो मुक्तकेशो मैथुने च व्यवस्थितः ॥
प्रकर्त्तव्यं प्रयत्नेन सर्व्वकामार्थसिद्धये ।
किं बहूक्तेन देवेशि सर्व्वं प्राप्नोत्यसंशयं ॥
द्विजादीनान्तु सर्व्वेषां [६ क] दिवा विधिरिहोच्यते ।
शूद्राणां तु तथा प्रोक्तं रात्रिदृष्टं महामतं ॥
यद्यत्कामयते चित्ते तत्तदाप्नोति नित्यशः ।
भैरवन्तं यजेदादौ पश्चाद्देवीं प्रयत्नतः ॥
द्विधा विभज्य वस्तूनि यत्नात्साधकसत्तमः ।
मांसं रक्तन्तिलकेशं नखं भक्तञ्च पायसम् ॥
आज्यं चेति प्रयत्नेन होतव्यं सर्व्वसिद्धये ।
एवं कृत्वा विधानं हि लभते सिद्धिमुत्तमाम् ॥

यद्यत्प्रार्थयते चित्ते तत्तदाप्नोति सर्व्वथा ।
देवत्वं दानवत्वञ्च सिद्धचारणतान्तथा ॥
दत्वा सम्पूज्य चाप्नोति सर्व्वमेवमतन्द्रितः ।
किं बहूक्तेन देवेशि सत्यं कृत्वा त्वयि ब्रुवे ॥
ब्रह्माण्डगोलके सिद्धिर्य्या काचिज्जगतीतले ।
करामलकवत् सिद्धिस्तस्य स्यान्नात्र संशयः ॥
एते सामान्यतः प्रोक्ताः प्रयोगा मन्त्रसिद्धये ।
विशेषतस्तु तान्येव कथयिष्याम्यतः परं ॥
एवन्देवीं कलुषदहनीम्पूजयित्वा यथावद् ।
हुत्वा दत्वा बलिमपि तथा तर्प्पयित्वाभिषिच्य च ॥
यं यं कामं वच्चयति मनस्याहितं संहितं वा ।
तन्तं प्राप्य श्रयति पदवीं योगिभिः प्रार्थनीयाम् ॥

इत्यादिनाथविरचितायां महाकालसंहितायां सप्तावरणसामान्यप्रयोगो नाम द्विशताधिकत्रिचत्वारिंशः पटलः ॥३॥

अथातः संप्रवक्ष्यामि प्रयोगानतिगोपितान् ।
सकृद्विधानतो येषां सर्व्वसिद्धिः करे स्थिता ॥
कामराजादयो भेदास्त्रिपुराया यथा प्रिये ।
तथा कामकलाकाल्या भेदाश्चाष्टौ पुरोदिताः ॥
एषैव प्रकृतिर्ज्ञेया [६ ख] सर्व्वाः प्रकृतयो पराः ।
मन्त्रे ध्याने विशेषोस्ति न प्रयोगे कदाचन ॥
या गुह्यकाली कथिता समंत्रध्यानपूजना ।
वक्ष्यमाणप्रयोगेन सैव कामकला भवेत् ॥
पुरश्चरणमेकं हि कृत्वा देवि वरानने ।
तत एते प्रकर्त्तव्याः प्रयोगा मंत्रसिद्धये ॥

शिवाप्रयोगं वक्ष्यामि तत्राप्यादौ वरानने ।
सदा कृष्णचतुर्द्दश्यां कृतनित्यक्रियोदिवा ॥
चतुर्व्विधान्नसामग्रीं रात्रौ निष्पादयेत्सुधीः ।
पायसापूपसंयावशष्कुलीमोदकान्वितां ॥
नानाविधौदनयुतां नानाव्यञ्जनपूरितां ।
नानाविधमहामत्स्यमांससंभारसंभृतां ॥
अन्यैश्च विविधैर्भक्ष्यैः षड्रसैः परिपूरितां ।
हैमे वा राजते ताम्रे मृण्मये भाजनेथवा ॥
पलाशपुटके वापि मधूकस्य दलेथवा ।
एकीकुर्य्यात्ततः सर्व्वं पृथक्पृथगुदारधीः ॥
अथान्यभाजने तद्वद्भिन्नभिन्नतया प्रिये ।
स्थापयेद्वक्ष्यमाणानि शुचिमांसानि भागशः ॥
पुटके पुटके कुर्य्यादेकीभावन्न कारयेत् ।
एकीभावान्महान्दोषः फलसिद्धिश्च नो भवेत् ॥
आमान्यजाद्यनानीह तथा पर्य्युषितानि च ।
अनुत्तप्तानि मेध्यानि पार्श्वान्द्ररहितानि च ॥
अपूतिगन्धीनि तथा क्रव्याद्भिरहितानि च ।
रक्तवन्ति च रक्तानि रसवन्ति तथैव च ।
वाराहमार्क्ष कापेयं खाड्गं माहिषमेव च ।
गौधं शाल्यं तथा मार्गं कार्ष्णसारं च राङ्कवं ॥
गावयं च तथा शाशं माजमौरणमेव च ।
नाक्रं च कामथं प्राहुं वाभ्रवं सर्व्वकामदं ॥
अष्टादशापि मांसा [१० क] नि कुर्य्यादेकत्र साधकः ।
स्थलजान्यपि वार्जानि ग्रामजारण्यजान्यपि ॥

अथापराणि खामानि षट्त्रिंशत्पललान्यपि ।
कुर्य्यादेकत्र विधिवत्साहसी साधकोत्तमः ॥
वार्ध्रीनसं च कापोतं पारावतमथापि च ॥
औलूकञ्च तथा श्यैनं खाञ्जनं चासमेव च ।
काकं च कौरवं पैकं कौक्कुटं चाटकं तथा ॥
कालिंगं कारटञ्चापि दात्यूहं चातकन्तथा ।
गार्ध्रं चैल्लं च कैरं च क्रौञ्चं वाकं तथैव च ॥
मायूरत्तैत्तिरं चापि हांसं चाक्रं च सारसम् ।
चाकोरण्टैट्टिभं चापि लावं हारीतमेव च ॥
कारण्डवं च वार्त्ताकं शात्रपत्रं च मार्ग्गवं ।
कौयष्टिकं भरद्वाजं सर्व्वं षट्त्रिंशदीरितं ॥
कर्त्तव्यानि तथैतानि पूर्व्वोक्तगुणवन्ति च ।
एतानि मांसान्यादाय सर्व्वाण्येव शुचिस्मिते ॥
पुटके पुटके कुर्य्यात्पृथक्पृथगमायया ।
तदन्न तानि मांसानि गृहीत्वा कुसुमादि च ॥
ततोर्द्धरात्रचोत्थाय श्मशानाभिमुखो व्रजेत् ।
अथवा विपिनं घोरं निर्ज्जनं भूतसंकुलं ॥
उत्तराभिमुखो भूत्वा साधको वीतभीः शुचिः ।
प्रेतचेलासनं कृत्वा कृत्वा चांबुजमासनं ॥
उपविश्यार्च्चयेद्देवीङ्कालीङ्कामकलाभिधां ।
गंधैः पुष्पैश्च धूपैश्च दीपैर्न्नैवेद्यसंचयैः ॥
जप्त्वा स्तुत्वा नमस्कृत्य ततोनुज्ञां हि याचयेत् ।
अनेनैव तु मन्त्रेण वक्ष्यमाणेन पार्व्वति ॥
कृताञ्जलिपुटो भूत्वा धरातलमिलच्छिराः ।

देवि कामकलाकालि सृष्टिस्थित्यन्तकारिणि ॥
अनुज्ञां देहि मे देवि करिष्येहं शिवाबलिं ।
इत्य [१० ख] नुज्ञां समादाय निर्भीः प्रयतमानसः ॥
उल्कामुखीर्घोररूपा शिवा आवाहयेच्छनैः ।
वक्ष्यमाणेन मंत्रेण त्रिरुच्चार्य्य विशेषतः ॥
बद्धाञ्जलिर्म्मुक्तकेशो मालावान्नग्न उत्थितः ।
तारवाग्भवह्रीरोष प्रासादानंगभौतिकं ॥
मुखवामेक्षणोष्ठाद्यो रदाधो युद्धच कारकः ।
योगश्च बलयोर्द्विर्द्विः कामलञ्च ततः प्रिये ॥
बीजमुद्धृत्य षड्वर्णं नाम सम्बोधयेत्ततः ।
घोररावे इति पदं ततोनन्तर मुच्चरेत् ॥
महाकापालि च तथा विकटदंष्ट्रे तथैव च ।
संमोहिनी शोषिणी च सम्बोधनतया वदेत् ॥
करालवदने चेति तत उच्चारयेत्सुधीः ।
मदनोन्मादिनि पदं ज्वालामालिनि चेति च ॥
शिवारूपिणि चोद्धृत्य ततो भगवतीति च ।
आगच्छ द्वन्द्वमुल्लिख्य मम सिद्धिमितीति च ॥
देहि युग्मं मामिति च रक्ष रक्षेति चोद्धरेत् ।
ह्रां ह्रीं ह्रूं ह्रौं ततः प्रोक्त्वा क्षां क्षीं क्षूं क्षौं विनिर्द्दिशेत् ॥
क्रोधयुग्मं चास्त्रयुगं वह्निजायान्तगो मनुः ।
त्रिरुच्चार्य्य शनैरित्थं प्रतीक्षेत शिवापथं ॥
कालीरूपधराः सर्व्वा यद्यागच्छन्ति तत्क्षणात् ।
तदा सिद्धिं विजानीयाद्विपरीते तु सान्यथा ॥
शनैरुच्चारयन्मन्त्रं पूर्व्वोक्तं भक्तितत्परः ।

अर्द्धप्रहरपर्य्यन्तं पश्येत्तन्मार्ग्गमादरात् ॥
आगताभ्यो नमस्कुर्य्याद्दूरेणैव तु साधकः ।
पूजयेद्दूरतः स्थित्वा भक्तिभावेन भाविनि ॥
पाद्यार्घ्याचमनीयैश्च स्नानीयैर्ग्गन्धपुष्पकैः ।
धूपैर्द्दीपैश्च नैवेद्यैरन्यद्यच्च संभवेत् ॥
सर्व्वोपचारैः संपूज्य भक्तिनम्रः प्रसन्नधीः ।
[११ क]तदन्नमग्रतः कृत्वा ततो दद्याच्छिवाबलिं ॥
वैहंगमानि मांसानि पंक्तिशः स्थापयेदपि ।
सर्व्वमेकत्र संस्थाप्य गृहीत्वा पाणिना जलं ।
उत्सृजेन्मनुनानेन गदतो मे निशामय ॥
प्रणवं च अपाङ्कोवी ङेन्तन्नाम समुच्चरेत् ।
ङेन्तं महाघोररावा भगमालिनि चेति च ॥
तद्वच्छिवारूपिणी च ज्वालामालिनि ङेन्तवत् ।
इमं बलिमिति स्थाप्य प्रयच्छामि सकृद्वदेत् ॥
गृह्ण द्वंद्वं खाद युगं मम सिद्धिमितीति च ।
कुरु युग्मं समुद्धृत्य मम शत्रूनथोच्चरेत् ॥
नाशयेति युगं प्रोच्य मारयेति तथैव च ।
स्तंभयोच्चाटय हन विध्वंसय तथापि च ॥
विद्रावय पच छिंधि शोषय त्रासय त्रुट ।
मोहयोन्मूलय तथा भस्मीकुरु तथैव च ॥
जृंभय स्फोटय तथा मथ विद्रावयेति च ।
हर विक्षोभय तुद दम मर्द्दय पातय ॥
चतुर्व्विंशतिकस्यास्य युगं युगमुदीरयेत् ।
तत उच्चारयेदेतत्सर्व्वभूतभयंकरि ।

ततः सर्व्वजनेत्युक्त्वा मनोहारिणि चोद्धरेत् ।
सर्व्वशत्रुक्षयं प्रोच्य करिशब्दं विनिर्दिशेत् ॥
ज्वलयुग्मं प्रज्वलयुगं शिवारूपधरेति च ।
काली कपाली संबोध्या महाकापालि चेति च ॥
ह्रीं युग्मं ह्रं च युगलं प्रासादयुगलं तथा ।
राज्यं मे समनूद्धृत्य देहि युग्ममथो वदेत् ॥
किलियुग्माच्च चामुण्डे यमघण्टहिलेर्य्युगात् ।
मम सर्व्वाभीष्टपदं ततो वै साधयद्वयम् ॥
संहारिणिपदं दत्वा संमोहिनिपदं ततः ।
कुरुकुल्लेति [११ क] संबोध्य ततः किरियुगं पठेत् ॥
क्रोधयुग्मास्त्रयुग्मं च शिरोन्तो मनुरीरितः ।
त्रिरुच्चार्य्योत्सृजेदन्नं पललं शाकुलं च यत् ॥
कालीरूपा स्तुता ध्यायेदेवमेव न संशयः ।
ततोऽपसृत्य तत्स्थानात्किञ्चिद्दूरे व्रजेत वै ॥
यथागच्छन्ति ताः सर्व्वा न बिभ्यति तथा चरेत् ।
दूरे स्थित्वा निरीक्षेत किमादौ भक्षयन्ति ताः ॥
सर्व्वा आगत्य चेत्सर्व्वमश्नन्ति दयिते तदा ।
सर्व्वसिद्धिं विजानीयाद्राज्यलाभं तथैव च ॥
यद्यच्च भक्षयन्त्येतास्तत्तत्फलमवाप्नुयात् ।
यद्यच्च नैव खादन्ति तत्तन्नैव फलं भवेत् ॥
विशेषञ्च प्रवक्ष्यामि श्रुत्वा तदवधारय ।
अन्नेन धनलाभः स्यात्तायसैर्व्वाग्मिता भवेत् ॥
घृतेनायुरवाप्नोति पूपैः पुण्यमवाप्नुयात् ।
शष्कुलीमोदकैः कीर्त्तिं वाहनं कृशरैरपि ॥

तैमनैः पुत्रलाभः स्यान्मत्स्यैराप्नोति कामिनीम् ।
आममांसाच्च या सिद्धिस्तदपि व्याहरामि ते ॥
वाराहेणार्थलाभः स्याद् भाल्लूकेन गृहस्य च ।
प्लावंगमेन विद्या स्यात्खाङ्गकैर्विजयं रणे ॥
माहिषेणैव मांसेन राज्यप्राप्तिर्भवेद् ध्रुवम् ।
गौधेनापत्यमाप्नोति शाल्यैः सौन्दर्य्यमुत्तमम् ॥
आरोग्यं हारिणेनाशु कार्ष्णसारैर्बलोन्नतिम् ।
ज्ञातिश्रैष्ठ्यं राङ्कवैश्च गावयै राजमान्यताम् ॥
शार्शम्मेधावितां गच्छेदाजैरजरतां व्रजेत् ।
आविंयेन तु मांसेन सर्व्वकल्याणमाप्नुयात् ॥
वह्निवञ्चापि नाक्रेण भूमिप्राप्तिस्तु कामठैः ।
ग्राहेणाभेद्यतनुतां नाकुलैर्म्महतीं श्रियम् ॥
अष्टादशानां मांसानां फलं ते कथितं मया ।
[१२ क] अतः परं प्रवक्ष्यामि पक्षिमांसफलं महत् ॥
वार्ध्रीनसे राज्यफलं कापोते मोक्षमव्ययम् ।
पारावते राजकन्यामौलूके रिपुसंक्षयम् ॥
शत्रुवाक्स्तम्भनं श्यैने खाञ्जनेऽदृश्यरूपताम् ।
चाषेऽणिमपदप्राप्तिः काङ्के खेचरतां व्रजेत् ॥
कौरटे वशकारित्वं पैके चाकर्षणं भवेत् ।
कौक्कुटे द्रावणं सिद्धयेच्च् चाटके मोहनं तथा ॥
कालिङ्गे स्तम्भनं विन्देदुच्चाटं काकमांसके ।
दात्यूहे मारणं गच्छेच्चातके द्वेषणं तथा ॥
शोषणं जायते गार्ढे चैल्ले मूर्च्छनमेव च ।
शौके च क्षोभणं दिश्येत्क्रौञ्चे चोन्मादमेव च ॥

काङ्के चाञ्जनलाभः स्यात्खड्गसिद्धिश्च वार्हिणे ।
भूताः प्रेताः पिशाचाश्च वेताला गुह्यकास्तथा ॥
विनायकाः क्षेत्रपाला यक्षा राक्षसजातयः ।
गन्धर्व्वाश्च तथा नागा डाकिन्यो घोणका अपि ॥
विद्याधराश्च सर्प्पाश्च तथैवाप्सरसां गणाः ।
सर्व्वे भवन्ति वशगास्तैत्तिरे पलले प्रिये ॥
हांसे तु पादुकासिद्धिर्य्यक्षिण्यश्चाक्रवाकके ।
सारसे धातुवादः स्याच्चाकोरे गुटिका प्रिये ॥
टैट्टिभे चिरजीवित्वं लावेऽन्तर्द्धानमाप्नुयात् ।
हारीते कामरूपित्वं सत्यं प्राप्नोति भामिनि ॥
कारण्डवे जलस्तम्भं वह्निस्तम्भं च वर्त्तके ।
शातपत्रे स्वर्गगतिं प्राप्नुयान्नात्र संशयः ॥
शापानुग्रहसामर्थ्यं माद्गवेनैव विन्दति ।
भारद्वाजेन मांसेन चक्रवर्त्तित्वमाप्नुयात् ॥
नारं मांसं न दातव्यं ब्राह्मणेन कदाचन ।
शूद्रेणैव प्रदातव्यं सर्प्तत्रिंशत्तमं हि तत् ॥
तस्य [१२ ख] प्रदानाद्देवेशि साधकः षष्टिसिद्धिभाक् ।
तवैतत्कथितं कान्ते मांसदानफलं महत् ॥
शिवास्तु नावमन्तव्या देवीरूपा हि ता यतः ।
फेरुरूपं हि धृत्वा सा स्वयमायाति कालिका ॥
कालीभावेन ता ध्येयाः सत्यं सत्यं हि भामिनि ।
यदि नायान्ति ताः सर्व्वास्तदा विघ्नः प्रजायते ॥
भक्षयन्ति न चेत्तास्तु तदैव मरणं भवेत् ।
तस्मात्सर्व्वप्रयत्नेन पूर्व्वमेव परीक्षयेत् ॥

आयान्ति वाथ नायान्ति श्मशाने वाथ निर्जने ।
शिवासु भक्षयन्तीषु भूतेभ्यो बलिमाहरेत् ॥
संहारभैरवायापि क्षेत्रपालेभ्य एव च ।
डाकिनीभ्यश्च सर्वाभ्यो बलिं दद्याच्च साधकः ॥
महदैश्वर्य्यमाप्नोति निःशेषं भक्षयन्ति चेत् ।
अर्द्धे तु स्वल्पसिद्धिः स्यादभोज्ये तु विपद् भवेत् ॥
अनागमे तु मरणं तस्माद्यत्नेन साधयेत् ।
प्रत्यष्टम्यां चतुर्द्दश्यामेवं कुर्व्वीत साधकः ॥
सार्द्धाब्दमध्ये सिद्ध्येत वारे षट्त्रिंशके प्रिये ।
शिवाबलिरयं प्रोक्तो महाफलमहोदयः ॥
एतस्य फलबाहुल्यं कथितुं नैव शक्यते ।
विद्यावान्बलवान्वाग्मी चिरजीवी निरामयः ॥
धार्म्मिको विजयी दक्षो यशस्वी भूपवल्लभः ।
ज्ञातिश्रेष्ठः पुत्रवांश्च सर्व्वयोषित्प्रियः सुखी ॥
रूपवान्बलवान्धीरो विक्रान्तो विश्वपूजितः ।
स धन्यः सर्वविच्चैव भवत्यत्र न संशयः ॥
सौन्दर्य्ये मन्मथः साक्षाद् बलेऽपि स्यात्समीरणः ।
रामाऽर्ज्जुनसमो युद्धे विद्यायां गीष्पतिर्य्यथा ॥
धने कुबेरसदृशो चिरायुर्व्यासरामवत् ।
क्ष[१३ क]मायां पृथिवीतुल्यो गाम्भीर्य्ये सागरो यथा ॥
मेरुकैलासवद्धैर्य्ये प्रभुत्वे वासवोपमः ।
लावण्ये चन्द्रतुल्योऽसौ प्रतापे भास्करोपमः ॥
तडिद्वद्दुर्न्निरीक्ष्योऽसौ भवेद्देव्याः प्रसादतः ।
यावत्यः सिद्धयः सन्ति समस्तजगतीतले ॥

करामलकवत्सर्व्वा भवन्त्येव न संशयः ।
अन्या अपि प्रसिद्धयन्ति सिद्धयः साधकस्य तु ॥
अणिमा खेचरत्वञ्च कामरूपित्वमिच्छया ।
शापानुग्रहसामर्थ्यं त्रैलोक्यवशता तथा ॥
कृपाणाञ्जनसिद्धिश्च वेतालगुटिकादि च ।
यक्षिणीधातुवादश्च स्तम्भोऽनलखगाम्बुनाम् ॥
अव्याहतगतित्वञ्च सर्वाकर्षणमोहनम् ।
मेरुमन्दरकैलासस्वर्गादिगमनं तथा ॥
सर्व्वं साधयति क्षिप्रं शिवाबलिविधानतः ।
आरोग्यं मनसः सौख्यं विजयोऽव्याधता तथा ॥
अविघ्नता दुःखनाशः पुत्रलाभः सुखोन्नतिः ।
सर्वकल्याणवाञ्छाप्तिर्भयनाशो महोदयः ॥
नानारोगादिनाशश्च बलिदानात्प्रजायते ।
बलिदानस्य माहात्म्यं कथयिष्ये कियत्तव ॥
स्वल्पमेव मया प्रोक्तं बहु वक्तुं न शक्यते ।
इतोऽपि फलबाहुल्यं सत्यं सत्यं हि पार्व्वति ॥
दण्डवत्प्रणमेत्तास्तु ततो वै देवताधिया ।
स्तुतिं कुर्य्यात्स्तवैरेतैः कवचैश्च विशेषतः ॥
शिवारूपधरे देवि कामकालि नमोऽस्तु ते ।
उल्कामुखि ललज्जिह्वे घोररावे शृगालिनि ॥
श्मशानवासिनि प्रेते शवमांसप्रियेऽनघे ।
अरण्यचारिणि शिवे फेरो जंबुकरू[१३ ख]पिणि ॥
नमोऽस्तु ते महामाये जगत्तारिणि कालिके ।
मातङ्गि कुक्कुटे रौद्रि कालकालि नमोऽस्तु ते ॥

सर्वसिद्धिप्रदे देवि भयंकरि भयावहे ।
प्रसन्ना भव देवेशि मम भक्तस्य कालिके ॥
संसारतारिणि जये जय सर्वशुभंकरि ।
विस्रस्तचिकुरे चण्डे चामुण्डे मुण्डमालिनि ॥
संहारकारिणि क्रुद्धे सर्व्वसिद्धिं प्रयच्छ मे ।
दुर्गे किराति शवरि प्रेतासनगतेऽभये ॥
अनुग्रहं कुरु सदा कृपया मां विलोकय ।
राज्यं प्रयच्छ विकटे वित्तमायुः सुतान् स्त्रियम् ॥
शिवाबलिविधानेन प्रसन्ना भव फेरवे ।
नमस्तेऽस्तु नमस्तेऽस्तु नमस्तेऽस्तु नमोनमः ॥
इत्येतैरष्टभिः श्लोकैः शिवास्तोत्रमुदीरयेत् ।
ततस्तच्छेषमन्नं यद्भाजनं वान्यदेव वा ॥
सर्वं हि निखनेद् भूमौ प्रयत्नेनैव पार्व्वति ।
यदि काका मृगाः श्वानो ये चान्येऽरण्यवासिनः ॥
भक्षयन्ति तदुच्छिष्टं तदा विघ्नः प्रजायते ।
स्वयं तदवशिष्टं यत्प्रसादमुपयोजयेत् ॥
गन्धं माल्यं च नैवेद्यं यद्यद्देव्यै प्रकल्पितम् ।
रात्रावेव समागच्छेत् प्रयतः प्रेतमन्दिरात् ॥
एष मुख्यः प्रयोगस्तु गुह्यकाल्या वरानने ।
एतत्प्रयोगादेवैव काली कामकला भवेत् ॥
न भेदस्त्वनयोः सत्यं प्रयोगे मन्त्रसिद्धये ।
अन्येऽपि भेदाः सन्त्यस्याः कथयिष्यामि तानहम् ॥
एष कामकलाकाल्या मन्त्रः प्रकृतिरुच्यते ।
विकृतिर्गुह्यकाल्यास्तु मन्त्रो यः षोडशाक्षरः ॥

स्थितायां प्रकृतौ देवि वि[१४ क]कृतिर्न बलीयसी ।
सप्तानामेव मन्त्राणामयमेवाग्रणीः प्रिये ॥
त्रैलोक्याकर्षणो मन्त्रो यदि भाग्येन लभ्यते ।
तदा शिवाबिधाने तु स एव परिनिष्ठितः ॥
अभावे तस्य मन्त्रस्य गुह्यकाल्या मनुर्मतः ।
विनोपदेशं यः कुर्य्यात् प्रयोगं कामकालिकम् ॥
सद्यः स मृत्युमाप्नोति भक्षितो योगिनीगणैः ।
ग्राह्यस्तस्मात्प्रयत्नेन मनुरष्टादशाक्षरः ॥
राज्यदानैः प्राणदानैरुपदेशो गुरोः प्रिये ।
आत्मनः क्षेममन्विच्छेद्यदि साधकसत्तम. ॥
न तु वा गुह्यकाल्यास्तु मनुर्नैवाखिलं भवेत् ।
गुरूपदिष्टमार्गेण प्रयोगेण वरानने ॥
इत्येष कथितो यत्नाच्छिवाबलिविधिस्तव ।
कथयस्व महागौरि किमन्यच्छ्रोतुमिच्छसि ॥

इत्यादिनाथविरचितायां महाकालसंहितायां शिवाबलिप्रयोगो नाम
द्विशताधिकचतुश्चत्वारिंशः पटलः ॥४॥

देव्युवाच ॥

विश्वोपकारक विभो शंभो संसारतारक ।
त्वत्तः श्रुतमिदं सर्वं श्रुत्वा चैवावधारितम् ॥
केन कामकलानाम प्राप्तवत्यम्बिका परम् ।
तदहं श्रोतुमिच्छामि त्वत्तो योगिजनप्रिय ॥
प्रयोगेणार्च्चया वापि ध्यानेनाथ स्तवेन वा ।
प्रोच्यते सापरा शक्तिः काली कामकलाह्वया ॥

शृण्वन्ती ते मुखाम्भोजान्न तृप्तिमधियाम्यहम् ।
कथयस्व महादेव प्रयोगं कामकालिकम् ॥

श्री महाकाल उवाच ॥

अतिगुह्यतमं देवि प्रयोगं पृष्टवत्यसि ।
नाख्यातो योऽद्यपर्य्यन्तं कस्मा अपि व[१४ ख]रानने ॥
तमहं कथयिष्यामि यतो भक्तासि पार्वति ।
संगोपनीयो यत्नेन न वाच्यो यस्य कस्यचित् ॥
चिकीर्षयापि यस्यास्य सिद्धिं विन्दति साधकः ।
किं पुनः करणेनेह भविष्यति शुचिस्मिते ॥
प्राणात्ययेनापि पुनर्न वाच्यं यत्र कुत्रचित् ।
स्मरणादस्य योगस्य प्रसन्ना कालिका भवेत् ॥
किं बहूक्तेन देवेशि धन्यावावां जगत्त्रये ।
यतः पृच्छसि वक्तास्मि प्रयोगं कामकालिकं ॥
नैवास्ति त्वय्यकथ्यं मे गुह्याद् गुह्यतरं हि यत् ।
शृणुष्व तं योगवरं भक्तियुक्तेन चेतसा ॥
अवहेला न कर्तव्या न जुगुप्सा कदाचन ।
न निन्दा न परीवादो न द्वेषो नैव धिक्कृतिः ॥
कृते तु सर्वनाशः स्यान्मरणं रोगपूर्णता ।
दारिद्र्यं पुत्रनाशश्च बन्धनं निगडादिभिः ॥
तस्मान्निन्दा न कर्तव्या यदीच्छेदात्मनः शुभम् ।
स्वभाव एव देव्यास्तु प्रीतिरेतत्प्रयोगतः ॥
राजाज्ञेवाप्रणोद्येयं शैव ब्रूते सनातनी ।
प्रयोगस्त्रिविधोऽयं च शक्याशक्यनिबन्धनः ॥

राजपूर्व्वो मध्यपूर्व्वो लघुपूर्व्वस्तथैव च ।
योगः कामकलाख्योऽयं तत्रादि व्याहरामि ते ॥
रामाः षोडशवर्षीया रूपयौवनगर्विताः ।
विशाललोचनाः श्यामाः शारदेन्दुनिभाननाः ॥
घनकुन्तलभारिण्यः पीनोत्तुंगकुचोन्नताः ।
विशालजघनाभोगा अतिक्षीणकटिस्थलाः ॥
बृहन्नितम्बदृषदो जातरूपतनुश्रियः ।
पीनोरवः कान्तिमत्यः सर्व्वाभरणभूषिताः ॥
भिन्नजातीयकाः सर्व्वा नारीराकारयेत्सुधीः ।
[१५क] ब्राह्मणी क्षत्रिया वैश्या शूद्रा दासी नटी तथा ॥
मालाकारिणिका चापि कुम्भकारिणिका तथा ।
सौचिकी च कुविन्दी च तन्तुवाय्यसिमार्ज्जिका ॥
रजकी चर्म्मकारस्त्री तथायःकारिका प्रिये ।
शौण्डिकी नापिती त्वाष्ट्री कलादी काम्बरी तथा ॥
कैवर्ती सौल्विकी तैलकारिणी मागधी तथा ।
वेश्या कुमारी च तथा तथाभीरा च पुंश्चली ॥
सैरिन्ध्री दूतिका रण्डा प्रतिवेशनिकापि च ।
स्वजाया जीवनी चैव चतुस्त्रिंशच्च वारुडी ॥
चाण्डाली राजकन्या च षट्त्रिंशदिति ताः स्मृताः ।
पुष्पवासिततैलेन समभ्यक्ता वराननाः ॥
प्रसाधिताः स्नापयेत्तास्तोयैः कर्पूरवासितैः ।
उच्चरन्मन्त्रमेतं हि सकृत्सकृदुदारधीः ॥
प्रणवं च अपाकामो ततो भगवति स्मरेत् ।
महामाये पदं प्रोच्य ततोऽनङ्गपदं वदेत् ॥

वेगलाहसिनि स्मृत्वा मनो सर्व्वजनात् परम् ।
तारिणीति समुद्धृत्य ततः सर्व्ववशंकरि ॥
मोहयेति पदद्वन्द्वं प्रमोदय ततस्तथा ।
एह्यागच्छेति नामापि संबोध्य प्रवदेत् सुधीः ॥
सान्निध्यं च कुरु द्वन्द्वं युगं च कवचास्त्रयोः ।
स्वाहान्तोऽयं महामन्त्रः प्रशस्तः स्नापने प्रिये ॥
ततः प्रदद्याद्वसनं सर्व्वाभ्यश्च पृथक् पृथक् ।
भिन्नो भिन्नो मनुः प्रोक्तः सर्व्वस्मिन्नपि कर्म्मणि ॥
वस्त्रदानस्य मन्त्रञ्च गदतो मे निशामय ।
लज्जाकामवधूनां च युगं युगमनुस्मरेत् ॥
त्रैलोक्याकर्षणीत्युक्त्वा [१५ क] वस्त्रं गृह्ण युगं वदेत् ।
फडन्ते वह्निजाया च प्रोक्तो वस्त्रार्पणे मनुः ॥
साटी क्षौमदुकूलादि पट्टवस्त्रं विशेषतः ।
अन्यद्यद्यच्च भवति महामूल्यवदंशुकम् ॥
ततोऽर्पयेत्कज्जलञ्च वक्ष्यमाणमनुं वदन् ।
तारं क्रोधं समुद्धृत्य महाघोरतरे वदेत् ॥
फेत्कारराविणीत्युक्त्वा महामांसप्रियेति च ।
प्रणवास्त्रवधूकाममायारुट्कमलार्णकान् ॥
पिशाचराक्षसानुक्त्वा गुप्तयुग्मं समुच्चरेत् ।
मम जाड्यमिति प्रोच्य छेदय त्रितयं तथा ॥
वेदसंख्यं ततो भीतं प्रासादमिथुनं ततः ।
शत्रून्पूर्व्वं समुद्धृत्य ममशब्दं दहद्वयम् ॥
उच्चाटय स्तम्भयापि विध्वंसय युगं युगम् ।
सर्व्वग्रहेभ्य इत्युक्त्वा शान्तिं कुरु ततो वदेत् ॥

रक्षां कुरु तथा चोक्त्वा वाग्भवं त्रितयं स्मरेत् ।
फडन्ते ठद्वयं चापि सिन्दूरार्पणको मनुः ॥
अलक्तकार्पणं मन्त्रं प्रयत्नेनाशु मे शृणु ।
मारयुग्मं पुरः प्रोच्य नवकोटिपदं वदेत् ॥
योगिनीति ततः पश्चाद् ङेन्तं परिवृता तथा ।
रोपद्वयाभाम ङेन्तं ततोऽनङ्गपदं प्रिये ॥
वेगमालाकुला ङेन्ता मायायुग्मं ततः परम् ।
ङेन्तं ततो वदेत्कान्ते स्वयंभूः कुसुमप्रिया ॥
इमं पूर्व्वमलक्तं च अपाप्रासादयोर्युगम् ।
सुवासिनीति ङेन्तवन्निवेदयामि चेत्यपि ।
नमः शिरोन्तमुच्चकैरयं मनुः प्रकीर्तितः ॥
समर्हणकमन्दिरे विरच्य तत्र मण्डलम् ।
सितं हि पूर्व्वदिग्गतं तथारुणं च वह्निगम् ॥
[क ६१] परेतगं च मेचकं सुवीतिवच्च नैर्ऋतम् ।
प्रचेतसं च पाटलं समीरगं च हारितम् ॥
कुबेरगं च पिङ्गलं गिरीशगं हि धूमलम् ।
विधाय हीदृशं प्रिये दिगष्टशोभि मण्डलम् ॥
युगाख्यनिर्गमान्वितं तदीयपालसंयुतम् ।
विभिन्नरूपमण्डले निवेशयेत्तु ताः क्रमात् ॥
ऋषित्रिसंख्यमण्डलक्रमेण दीर्घपङ्क्तिगम् ।
ततोऽष्टसोमसंख्यकांश्चिवेश्य मण्डले स्त्रियः ॥
नवेन्दुसंख्यके प्रिये विरच्य मूलमण्डलम् ।
पुरोक्तयन्त्रमुत्तमं निवेश्य पूजनञ्चरेत् ॥
ततोऽनु तत्र कामिनीस्तदोपवेशयेत् क्रमात् ।

सरोषह्लोरमास्मरैः सवाग्भवैश्च मण्डले ॥
उपानुगं विशोच्चरेत् पुनस्तथैव चोद्धरेत् ।
सुसन्निधिं कुरु त्विदं भवेच्च वारयुग्मकम् ॥
ततोऽनलाङ्गनायुतो मनुः सदोपवेशने ।
गजेन्द्रतः परा प्रिये स्मृतं हि काममण्डलम् ॥
तदेव कामकालिकं सदैव मुख्यमुच्यते ।
तत्र कामकलानाम्नि मण्डले जगदम्बिकाम् ॥
आवाहयेज्जगद्धात्रीं वक्ष्यमाणमनुं वदन् ।
प्रणवं नारसिंहस्य पञ्चकं समनुच्चरेत् ॥
एह्येहीति पदं न्यस्य परमातत्त्वमुच्चरेत् ।
रूपिणीत्यपि चोद्धृत्य ततो भगवति स्मरेत् ॥
सम्बोधनतया नाम ततो भूतार्णपञ्चकम् ।
सन्निधिं च कुरु द्वन्द्वं क्रोधद्वन्द्वं ततोऽप्यनु ॥
अस्त्रद्वयादनु स्वाहा प्रोक्तो ह्यावाहने मनुः ।
इत्यावाह्य महापीठे सांनिध्यं परिकल्प्य च ॥
ततोऽनुज्ञां प्रार्थयीत सर्व्वासामपि पूजने ।
कलातीते नादबिन्दुशक्तिरूपिणि चिन्मये ॥ [१६ ख]
पराकुण्डलिनीरूपे शिवशक्तिस्वरूपिणि ।
देवि कामकलाकालि जगदुत्पत्तिकारिणि ॥
स्थितिकारिणि कल्पान्ते पुनः संहारकारिणि ।
परामृतरसास्वादपरमानन्दलोलुपे ॥
सदाशिवमहत्तत्त्वसामरस्यस्वरूपिणि ।
देवि कामकलाकालि सर्व्वसिद्धिप्रदेऽनघे ॥
अनुज्ञां देहि मे देवि प्रयोगे कामकालिके ।

इत्यनुज्ञां ततो लब्ध्वा क्रमात्पूर्व्वोदितः सुधीः ॥
पूजयेन्मण्डलस्थास्ता उपचारैर्य्यथोदितैः ।
जातिहीना इति ज्ञात्वा नावमान्याः कथञ्चन ॥
देवीप्रिया प्रपश्येत्ता इत्यागमविदो विदुः ।
पाद्यार्घ्याचमनीयाद्यैरन्यच्चोपकल्पितम् ॥
पूर्व्वोक्तेन विधानेन मन्त्रैरपि च तैः प्रिये ।
कर्त्तव्या विधिवत्पूजा यथा तास्तोषमाप्नुयुः ॥
ऊनविंशे मण्डले तु यजेद्देवीं प्रसन्नधीः ।
नित्यपूजोक्तविधिना सर्व्वसम्भारसञ्चयैः ॥
षडङ्गानि प्रविन्यस्य पीठन्यासं समाचरेत् ।
महामण्डूककालाग्निरुद्रञ्च कच्छपं तथा ॥
आधारे लिङ्गनाभौ च क्रमेणोपन्यसेत्सुधीः ।
एवं विचिन्त्य विधिवद्धर्म्मादीन् विन्यसेत्ततः ॥
अंसोरुयुग्मयोर्विद्वान् प्रादक्षिण्येन देशिकः ।
धर्म्मंज्ञानं सवैराग्यमैश्वर्य्यं विन्यसेत् क्रमात् ॥
मुखपार्श्वनाभिपार्श्वेष्वधर्म्मादीन्प्रकल्पयेत् ।
अनन्तं हृदये पद्ममस्मिन्सूर्य्येन्दुपावकान् ॥
एषु स्वस्वकला न्यस्येन्नामाद्यक्षरपूर्व्विकाः ।
सत्त्वादींस्त्रीन् गुणान् न्यस्येत्तथैवात्र गुरूत्तमः ॥
आत्मानमन्तरात्मानं परमात्मानमेव च ।
ज्ञानात्मानं प्रविन्यस्य न्यसेत्पीठमनुं ततः ॥
एवं देहमये पीठे चिन्तयेदिष्टदेवताम् ।
पूर्व्वोक्तेन विधानेन मनसा परिपूजयेत् ॥
मुद्रां प्रदर्श्य विधिना शङ्खस्थापनमाचरेत् ।

शङ्खमन्त्रेण संप्रोक्ष्य वामतो वह्निमण्डले ॥
साधारं स्थापयेद्विद्वान् व्युत्क्रमार्णैर्जलं क्षिपेत् ।
पूजयेद्वह्निसूर्य्येन्दून् बीजैस्तत्तत्कलान्वितैः ॥
तत्तत्कला तु संख्याता दशद्वादशषोडशैः ।
तीर्थावाहनमन्त्रैश्च तीर्थान्यावाह्य पूजयेत् ॥
गन्धपुष्पाक्षतैर्द्धूपदीपाद्यैरभिपूजिते ।
शङ्खे पाणितलं दत्त्वा चाष्टधा प्रजपेन्मनुम् ॥
चिन्मयञ्चिन्तयेत्तीर्थमानीयाङ्कुशमुद्रया ।
अस्त्रमन्त्रेण रक्षित्वा कवचेनावगुण्ठ्य च ॥
धेनुमुद्रां समासाद्य बोधयेत्तत्त्वमुद्रया ।
दक्षिणे प्रोक्षणीपात्रमाधायाद्भिः प्रपूजयेत् ॥
किञ्चिदर्घ्याम्बु संगृह्य प्रोक्षण्यंभसि योजयेत् ।
अर्घस्योत्तरतः कार्य्यं पाद्यमाचमनीयकम् ॥
परमीकृत्य तं शङ्खं पावनं परिचिन्तयेत् ।
देवस्य मूर्द्धनि तत्किञ्चित्पूजाद्रव्येषु चात्मनः ॥
अवेक्षणं प्रोक्षणं च वीक्षणं ताडनं तथा ।
अर्च्चनञ्चैव सर्व्वेषां पावनं सम्प्रकल्पयेत् ॥
अर्घपात्रे प्रदातव्या गन्धपुष्पयवाक्षताः ।
कुशाग्रतिलदूर्व्वाश्च सर्षपाश्चार्थसिद्धये ॥
पाद्यपात्रे प्रदातव्यं श्यामाकं कूर्च्चमेव च ।
अब्जञ्च विष्णुक्रान्ताञ्च पाद्यसिद्ध्यै प्रकल्पयेत् ॥
तथाचमनपात्रे च दद्याज्जातीफलं पुनः ।
लवङ्ग [१७ ख] मपि कक्कोलं शस्तमाचमनीयकम् ॥
दध्ना च मधुसर्पिर्भ्यां मधुपर्को भविष्यति ।

बाह्यपूजां ततो कुर्य्यादैहिकाभ्युदयाय वै ॥
पूर्व्वमेवोदितं देवि मण्डलस्य प्रकल्पनम् ।
तथापि फलबाहुल्यात्प्रसङ्गादुच्यते पुनः ॥
गोमयैर्लिप्तदेशे च मण्डलं तत्र कारयेत् ।
शालितण्डुलचूर्णैश्च नीलपीतसितासितैः ॥
लिखेदष्टदलं पद्मं चतुरस्रसमावृतम् ।
नवकोणं कर्णिकायां कोणाग्रं बीजभूषितम् ॥
कूर्म्मञ्च बृहदाकारं महामण्डूकमेव च ।
कालाग्निसंज्ञकं रुद्रं तस्मिन्पीठे प्रपूजयेत् ॥
तन्मध्ये साध्यमालिख्य कालीबीजानि संलिखेत् ।
सर्व्वतो मण्डलं चापि गायत्र्याः परिवेष्टयेत् ॥
गायत्रीञ्च प्रवक्ष्यामि यथावदवधारय ।
जपादस्याश्च दयिते राजसूयफलं लभेत् ॥
अनङ्गाकुलायै विद्महे मदनातुरायै धीमहि ।
तन्नः कामकलाकाली प्रचोदयात् ॥
गुरुपङ्क्ति नमेद्वामे गणेशादीन् परे तथा ।
मध्ये त्वाधारशक्तिञ्च पंकजद्वयधारिणीम् ॥
कूर्म्मञ्च बृहदाकारं महामण्डूकमेव च ।
कालाग्निसंज्ञकं रुद्रं तस्मिन्पीठे प्रपूजयेत् ॥
अभ्यर्च्चयेद्वसुमतीं स्फुरत्सागरमेखलाम् ।
तत्र रत्नमयं द्वीपं तस्मिंस्तु मणिमण्डपम् ॥
यजेत्कल्पतरुं तस्मिन्साधकोऽभीष्टसिद्धये ।
अधस्तात्पूजयेत्तस्य वेदिकां मण्डलोज्ज्वलाम् ॥
पश्चादभ्यर्च्चयेत्तस्यां पीठे धर्म्मादिभिः पुनः ।

रक्तश्यामहरिच्छुक्लनीलाभां ना [८१ क] दर्पिणीम् ॥
वृषकेशरिभूतेन रूपान् धर्म्मादिकान् यजेत् ।
अग्न्यादिषु विदिक्ष्वेवं धर्म्मादीन्पूजयेत् सदा ॥
अधर्म्मादीन् यजेत्पश्चात्पूर्व्वादिदिक्चतुष्टये ।
आनन्दकन्दं प्रथमं संविन्नालमनन्तरम् ॥
मन्त्री प्रकृतिपत्राणि विकारमयकेशरान् ।
पञ्चाशद्वर्णबीजाढ्यां कर्णिकां पूजयेत्ततः ॥
कलाभिः पूजयेत्सार्द्धं तस्मिन्सूर्य्येन्दुपावकान् ।
प्रणवस्य त्रिभिर्वर्णैरथ सत्त्वादिकान् गुणान् ॥
आत्मानमन्तरात्मानं परमात्मानमेव च ।
ज्ञानात्मानञ्च त्रिविधं पीठशक्तिं यजेत्पुनः ॥
तत्र पीठमनुं प्रोक्त्वा तत्र सिंहासनं न्यसेत् ।
उच्चरन्मूलमन्त्रं हि देवीं हृदि विचिन्तयन् ॥
करकच्छपिकारूपमुद्रया पुष्पमुत्तमम् ।
गृहीत्वा चिन्तयेद्देवीं तत्तन्मन्त्रानुसारतः ॥
तन्मध्ये चिन्तयेद्देव्या वाहनं शवमेव च ।
श्मशानं चिन्तयेत्तत्र शिवागणविराजितम् ॥
मुण्डाट्टहाससंयुक्तं शिवाशतनिनादितम् ।
शिवाभिर्बहुमांसास्थिमोदमानाभिरन्विताम् ॥
सुरासुरमुनीन्द्रैश्च योगिवृन्दैर्निषेविताम् ।
ध्यायेत्तत्रस्थितां देवीं कालीङ्कामकलाभिधाम् ॥
ध्यात्वा पूर्व्वोक्तविधिना चित्ते चानीय सुन्दरि ।
अञ्जल्यावाहयेत्तत्र देवीं साधकसत्तमः ॥
स्वागतादि ततः प्रश्नं प्रत्युत्तरसमन्वितम् ।

ततश्च आसनन्दत्वा पाद्यमर्घ्यं प्रकल्पयेत् ॥
तत आचमनीयञ्च स्नानोद्वर्त्तनमेव च
स्नानीयञ्च जलं दद्या[१८ ख]त्स्वाहामन्त्रैः प्रयत्नतः ॥
दिव्यवस्त्रन्ततो दत्वा दद्यादाभरणानि च ।
नमः पाद्यं तथा चार्घ्यं स्वाहान्ते दीयते ततः ॥
आचमनं स्वधान्ते च स्वाहान्ते च तथा मधु ।
गन्धन्नानाविधं रम्यं रक्तचन्दनमेव च ।
सिन्दूरङ्कुङ्कुमञ्चैव पुष्पदाम तथा पुनः ।
परिवारन्ततो देव्याः पूजयेत्साधकोत्तमः ॥
ततोगुग्गुलजं धूपं दद्यान्मन्त्रं समुच्चरन् ।
तद्वद्दीपः प्रदातव्यो मन्त्रोच्चारण पूर्व्वकम् ॥
ततः पाद्यादिकन्दत्वा नैवेद्यादीन्प्रकल्पयेत् ।
अन्नपानञ्च नैवेद्यं बलिदानन्तथैव च ॥
रक्तं मांसं मनोरम्यं मामं पक्वंपृथक्पृथक् ।
क्रमेण संप्रवक्ष्यामि देव्याः प्रीतिकरम्परं ॥
पञ्चामृतं तथा खण्डं शाल्यन्नं पिष्टकं तथा ।
यवगोधूमजैर्म्मुद्गैः पक्वान्नं परिकल्पयेत् ॥
व्यञ्जनं षड्रसोपेतं घृताक्तं सुमनोहरं ।
फलन्नानाविधं रम्यं परमान्नं तथैव च ॥
द्रव्येण सात्विकेनैवं ब्राह्मणः पूजयेच्छिवाम् ।
शाल्यन्नमाभिरं चैव सुरां माक्षिकसंभवां ॥
तालीञ्च विविधां गौडीं खार्ज्जूरीम्पुष्पसंभवाम् ।
एवं दद्यात्क्षत्रियोपि पैष्टिकीन्न कदाचन ॥
नारिकेलोदकं कांस्ये ताम्रे गव्यं तथा मधु ।

राजन्य वैश्ययोर्दानं न द्विजस्य कदाचन ॥
एवं प्रदान मात्रेण हीनायुर्ब्राह्मणो भवेत् ।
शूद्रस्य पैष्टिकीदानं नापरस्य विधीयते ॥
कृष्णसारस्तथा छागं मृगान्नानाविधानपि ।
मेषञ्च महिषं घृष्टिं तथा पञ्चनखानपि ॥
कपो[१६ क]तं टिट्टिभं हंसं चक्रवाकं च लावकम् ।
शरालि तित्तिरि मत्स्याः कलविंकं चकोरकम् ॥
अनुक्तं नैव दातव्यं द्विजवर्य्यैः कदाचन ।
सिंहं व्याघ्रन्नरं तद्वत् क्षत्रियः परिकल्पयेत् ॥
विहाय कृष्णसारञ्च क्षत्रियादेर्भवेद्बलिः ।
सिंहं व्याघ्रन्नरं हत्वा ब्राह्मणो ब्रह्महा भवेत् ॥
मूषं मार्ज्जारकं चापं शूद्रो दत्वा पतत्यधः ।
चन्द्रहासेन खड्गेन हन्यादेक प्रहारतः ॥
उत्थाय हननं कुर्य्यान्नोपविश्य कदाचन ।
स्वहस्तेन पशुं हत्वा पशुयोनिमवाप्नुयात् ॥
विंच त्रिपक्षतो न्यूनं महिषादींस्त्रिवर्षतः ।
अन्यं त्रिमासतो न्यूनन्न दद्याच्च कदाचन ॥
वृद्धम्वा विकृताङ्गं वा न कुर्य्याद्बलिकर्म्मणि ।
स्वगात्ररुधिरं दातुं क्षत्रियादेर्भवेद्बलिः ॥
सात्त्विको जीवहत्यां हि कदाचिदपि नोचरेत् ।
इक्षुदण्डं च कूष्माडं तथा वन्यफलादिकं ॥
क्षीरपिण्डैः शालिचूर्णैः पशुं कृत्वाचरेद्बलि ।
तत्तत्फल विशेषेण तत्तत्पशुमुपानयेत् ॥
कुष्माण्डं महिषत्वेन छागत्वेन च कर्क्कटीं ।

जातीकोषफलैलात्वप्लवङ्गमृगनाभियुक् ॥
कर्प्पूरशकलोन्मिश्रं ताम्बूलं कल्पयेत्ततः ।
पातालतलसंभूतं सर्व्वोपस्करसंयुतम् ॥
देवि कामकलाकालि त्वन्ताम्बूलं गृहाण मे ।
इति मन्त्रेण सततं ताम्बूलं विनिवेदयेत् ॥
ततस्तद्विधिना सम्यक् जपेन्मन्त्रमनन्यधीः ।
सन्तोष्य युवतीं रम्यां प्रजपेत्साधकोत्तमः ॥
स्वयोषां प[१६ ख]रयोषां वा नैवाकृष्य द्विजोजपेत् ।
लोभाद्यदि चरेदेव मद्योयाति द्विजस्तदा ॥
इहामुत्र फलं नास्ति हीनायुरपि जायते ।
देवत्यागान्मद्यपानाच्छूद्रभार्य्याप्रयोगतः ॥
तत्क्षणाज्जायते वामो ब्राह्मणो नात्र संशयः ।
स्वकीयाम्परकीयां वा सामान्य वनिताम्तथा ॥
जपेयुस्तां समाकृष्य क्षत्रविद् शूद्रजातयः ।
ऋषिकन्यां न चाकर्षेन्मद्यपानां च कन्यकां ॥
अन्त्यजानां स्त्रियं वापि व्रतस्थानां स्त्रियन्तथा ।
गुर्व्वङ्गनां गुरोः पत्नीं सगोत्रां शरणागतां ॥
शिष्ययोषां न चाकर्षेत्पापिनां वनितान्तथा ।
नापुष्पितां गुर्व्विणीम्वा बालापत्याम्तथा पुनः ॥
साधुशीलां सुभव्यां च समाकृष्यार्च्चनं चरेत् ।
पूजा काले च देवेशि विकारं वर्ज्जयेत्सदा ॥
विकारात्सिद्धिहानिः स्यात्साधकस्य न संशयः ।
जपं समर्प्पयेत्तस्यै मन्त्रोच्चारणपूर्व्वकम् ॥
पुष्पांजलित्रयन्दत्वा प्रदक्षिणमथो चरेत् ।

ततश्च स्तोत्रपाठादि कुर्य्यात्साधकसत्तमः ॥
सहस्रनामस्तोत्रं च कवचं चाऽन्वहं पठेत् ।
प्राणायामं षडङ्गञ्च विधाय तदनन्तरम् ।
आत्मानं देवतारूपं विचिन्त्यैनां विसर्ज्जयेत् ॥

इत्यादिनाथ विरचितायां महाकालसंहितायां कामकलाप्रयोगो नाम
द्विशताधिकपञ्चचत्वारिंशः पटलः ॥४॥

श्रीमहाकाल उवाच ।

अथ देवेशि सामान्य प्रयोगान्व्याहरामि ते ।
चिकीर्षयापि येषां हि राज्यं विद्या[२० क]च हस्तगा ।
चतुर्व्विंशतिभिश्चासां मध्यपूर्व्वो भवेद्विधिः ।
पूजामंत्रप्रकारस्तु स एव परिकीर्त्तितः ।
आसां द्वादशभिर्ज्ञेयो लघुपूर्व्वविधिः प्रिये ।
राज्ञामेतत्प्रशस्तं हि न द्विजस्य कदाचन ॥
यथोक्तविधिना चीर्णपौरश्चरणिकक्रमः ।
एतान्प्रयोगान्वीक्षेत नाजपित्वा कदाचन ॥
पर्व्वते वा नदीकूले शून्यागारे शिवालये ।
पीठे चतुःपथे कुर्य्यात्पुरश्चरणमुत्तमम् ॥
नियमास्तत्र भूयांसः प्रकर्त्तव्याः प्रयत्नतः ।
अवैधकरणात्सिद्धिहानिः स्यान्नात्र संशयः ॥
त्रिकालमाचरेत्स्नानं हविष्यं भक्षयेन्निशि ।
स्वमन्त्रं चाक्षसूत्रञ्च गुरोरपि न दर्शयेत् ॥
त्यजेद्दुष्टप्रवादञ्च परीवादञ्च वर्ज्जयेत् ।

तथा दुर्ज्जनसंसर्गं स्त्रीशूद्रालापनन्तथा ॥
वस्त्रं कुशासनं व्याघ्रचर्म्मं चापि नृमुण्डकम् ।
आसनेषु महादेवि प्रशस्तं चोत्तरोत्तरम् ॥
फलस्फटिकरुद्राक्षमुक्तानरास्थिविनिर्म्मिताम् ।
जपमालां शुभां विद्धि प्रशस्तामुत्तरोत्तराम् ॥
अनेनोक्तविधानेन लक्षसंख्ये जपेन्मनुं ।
होमंदशांशतः कुर्य्यात्तर्प्पणं चाभिषेचनम् ।
ततः सिद्धमनुर्म्मंत्री प्रयोगानाचरेत्प्रिये ।
शताभिजप्तमंत्रेण रोचनातिलके कृते ॥
दासा इव महीपालाः स्वयमायान्तिसन्निधौ ।
प्रमदा अपि तं दृष्ट्वा भवेयुर्गलितांबराः ॥
काकोलूक नरास्थीनि गृहीत्वा भौमवासरे ।
रात्रौ कृष्णचतुर्द्दश्यां सम्वेष्ट्यारक्ततन्तुना ॥
शताभिमंत्रितं कृत्वा[२० ब]निक्षिपेच्छत्रुमन्दिरे ।
सप्ताहाभ्यन्तरे तेषां महदुच्चाटनं भवेत् ॥
उदयात्पूर्व्वमारभ्य जपेदस्तंगमावधि ।
एकविंशदिनं यावदर्द्धरात्रे बलिं क्षिपेत् ॥
नग्नो नग्नां स्त्रियं गच्छेन्मूलमन्त्रं जपन् शतम् ।
एवं कृते प्रिये सद्यः सर्व्वज्ञः साधको भवेत् ।
नरास्थिनिखनेद्भूमौ स्वमूत्रप्लावितन्निशि ॥
शतञ्च प्रजपेन्मन्त्रं रिपुर्ज्वरयुतो भवेत् ।
काकपक्षैः शिवासृग्भिर्न्नरास्थिनालिखेदिदम् ।
तारं क्रोधत्रयं साध्यं द्वितीयान्तं बलिं वदेत् ॥
गृह्लद्वन्द्वं भक्षयुगं मारयद्वितयन्ततः ।

वह्निजायान्तगं मंत्रं मूलमन्त्रस्य साधकः ॥
सहस्रं परिजप्याथ निशायां वैरिमन्दिरे ।
क्षिपेद्देवीं हृदि ध्यात्वा मृत्युस्तस्य त्रिमासतः ॥
पद्ममष्टदलं भूर्ज्जे योनियुग्मसमन्विते ।
लाक्षागोरोचनाचन्द्रकाश्मीरमृगनाभिभिः ॥
वक्ष्यमाणक्रमेणैव लिखेन्मन्त्रमनन्यधीः ।
योनिमध्ये लिखेन्मूल मन्त्रमष्टादशाक्षरं ॥
वक्ष्यमाणानि वीजानि लिखेदष्टदलेष्वपि ।
आमृतं प्रथमं वीजं गारुडं तदनन्तरं ॥
महाक्रोधं क्षेत्रपालं प्रेतवीजं च पञ्चमम् ।
प्रासादं चण्डवीजञ्च कालीवीजमथाष्टमं ॥
दलयोरन्तरे लेख्यं तारं वाग्भवमेव च ॥
मायावीजं वधूवीजं वीजं कामलकामयोः ॥
रतिवीजं मेद्यवीजं लिखित्वा तदनन्तरम् ।
पाशांकुशक्रोधभूतवीजानिद्वारिसंलिखेत् ॥
अकारादिक्षकारान्तैर्व्वर्णैर्व्विन्दुसमन्वितैः
वेष्टयेद्वसुवज्राद्यं यन्त्रं सर्व्वोत्तमोत्तमं ॥
वेष्टितं रक्तवस्त्रेण जतुभिर्वेष्ट[२१ क]येत्ततः ।
बध्नीयात्पट्टवस्त्रेण बाहौ कंठे थवा नृणाम् ॥
स्त्रीणां वामकरे बद्धमन्येषां दक्षिणे करे ।
सर्व्वं संपादयेत्सद्यो नात्र कार्य्या विचारणा ॥
इयं रक्षा पुराबध्दा सिद्धयर्थे साधकोत्तमैः ।
शक्रेण नमुचेर्य्युद्धे विष्णुना तारकामये ॥
हरेणांधकसंग्रामे गरुडेनेन्द्रसंयुगे ॥

वायुना माहिषे युद्धे कुवेरेणामृताहवे ।
स्कन्देन तारकानीके पाशिना सुरभीरणे ॥
यमेन रावणस्याज्यै चन्द्रेण त्रिदशाजिरे ।
तथा कृतयुगादौ च राजानो ये महाबला: ॥
तैश्चाऽपि विधृतं यन्त्रं सर्व्वापत्तिनिवारणं ।
मांधाता जामदग्न्यश्च नहुष: शिविरेव च ॥
राम: पृथु: कार्त्तवीर्य्य: पुरुकुत्सौ रघुर्न्नल: ।
भरत: शशविन्दुश्च ययातिर्व्वसुकोऽर्ज्जुन: ॥
पूरु: पुरूरवाभीमो जरासन्धो विदूरथ: ।
एभिश्चान्यैश्च भूपालैरेतद्यन्त्रंधृतं पुरा ।
एतस्यान्यानि यन्त्राणि कलां नार्हन्ति षोडशीं ।
य एतं यन्त्रराजं हि धारयत्यप्रमादत: ॥
सश्रिया विष्णुसदृश: प्रभया सूर्य्यसन्निभ: ।
कान्त्या चन्द्रमसा तुल्यो यक्षाधिपसमोधने ॥
बलेन वायुना तुल्यो विद्यया गुरुणा सम:
सौन्दर्य्ये मन्मथप्रायो वैभवेनेन्द्र सन्निभ: ॥
तेजसा वह्निसदृशो रामाज्र्जुनसमोरणे ।
अथ किं बहुनोक्तेन शृणु पार्व्वति निश्चितं ॥
न कोपि भविता कश्चित्तत्तुल्य: पृथिवीतले ।
स सर्व्वसिद्धिमाप्नोति सुराणामपि दुर्ल्लभां ॥
रिपुसैन्यं महाघोरं स्तम्भयत्यचिरात्प्रिये ।
वन्ध्यापि ल[२१ ख]भते पुत्रं निर्द्धनो धनवान्भवेत् ।
विद्यार्थी लभते विद्यां कन्यार्थी कन्यकामपि ॥
यं यं कामं हृदि ध्यात्वा यन्त्रमेतत्प्रधारयेत् ।
तं तं काममवाप्नोति महाकालवचो यथा ॥

अपरञ्च प्रवक्ष्यामि प्रयोगं सिद्धिदायकम् ।
आनीय कामनीमेकां नवयौवनशालिनीम् ॥
असतीं सुन्दरीम्प्रीत्या परिहीनां महानिशि ।
वस्त्रालंकार कनकं दत्वा तस्यै यथा विधि ॥
नग्नो नग्नां मुक्तकेशो मुक्तकेशीं जपेन्मनुं ।
मैथुनेनोपगच्छेत् तस्याः सन्तोषपूर्व्वकम् ॥
योनिं स्वरेतसा लिप्त्वा तत्रेदं यन्त्रमालिखेत् ।
जिह्वया तल्लिहेत्सर्व्वं सत्कृत्यैवमकुत्सयन् ॥
ततश्चराचरं सर्व्वं ज्ञात्वा सर्व्वज्ञतां लभेत् ।
मूकांश्च वादयेत्सत्यं कवित्वं चापि कारयेत् ॥
अतीतानागतं वेत्ति वर्त्तमानञ्च पश्यति ।
कुर्य्याच्च वादिनो मूकान्सभायां पण्डितानपि ॥
विवादे जयमाप्नोति पूजां सर्व्वत्र विन्दति ।
किमन्येन प्रकारेण नराणां मंत्रसिद्धये ॥
अनेन विधिना विद्यां लक्ष्मीमपि सदाप्नुयात् ।
द्वादशाब्दं चरन्नेवं सिद्धाष्टक मवाप्नुयात् ॥
विद्याधरत्वमाप्नोति खेचरत्वं तथैव च ।
पातालतलचारित्वं तथा वाक्सिद्धिमेव च ॥
तस्य दर्शनमात्रेण मार्त्तण्डसमतेजसः ।
पिशाचयक्षरक्षांसि पलायन्ते दिशोदश ॥
ताम्बूलपत्रे मधुना साध्यनामलिखेत्सुधीः ।
मूलमन्त्रेण सम्वेष्ट्य मुक्तवासा दिगम्बरः ॥
वक्ष्यमाणेन मन्त्रेण भक्षयेदविचारयन् ।
प्रणवञ्च त्रपाबीजं कामबीजमनन्तरम् ।

साध्यनाम द्वितीयान्तं क्लेदयद्वितयं वदेत् ॥
आकर्षययुगं चापि मथद्वन्द्वं वदेत्ततः ।
युगं युगं वदेद्देवि पचद्रावयशब्दयोः ॥
आनयद्वितयं प्रोच्य मम सन्निधिमुच्चरेत् ।
क्रोधवाग्भवलक्ष्मीणां युगं युगमुदीरयेत् ॥
वह्निजायान्तगो मन्त्रः सर्व्वाकर्षणकारकः ।
अनेन विधिनाकर्षेद्यां यामिच्छति साधकः ॥
तयाप्यागच्छति क्षिप्रं यदि भूपस्य वल्लभा ।
सहस्रजनगुप्तापि यद्यन्तःपुरवासिनी ॥
यदि साक्षात्स्वयं देवी यदि वा स्यादरुन्धती ।
तथापि तस्याः सामर्थ्यं न स्यात् स्थातुं सुरेश्वरि ॥
स्वयमायान्ति निर्ल्लज्जा इतरासां तु का कथा ।
पत्युरङ्कं समुत्सृज्य सुतमङ्कान्निरस्य च ॥
पितरं चावमन्यापि बन्धून्धिक्कृत्य सर्व्वतः ।
गृहीता इव भूतेन स्वयमायान्ति योषितः ॥
तस्मान्निरीक्ष्य कर्त्तव्यः प्रयोगोऽयं शुचिस्मिते ।
प्रणवं रतिकामौ च मायाक्रोधांकुशश्रियः ॥
पाशवाग्भवमुच्चार्य्य कालीबीजमथोच्चरेत् ।
वदेत्कामकलाकालि सर्व्वाकर्षिणि चेत्यपि ॥
साध्यमाकर्षयेत्युक्त्वा वह्निजायामुदीरयेत् ।
मन्त्रेणानेनाभिमन्त्र्य तोयं वामेन पाणिना ॥

(१) ओं ह्रीं क्लीं अमुकीं क्लेदय क्लेदय आकर्षय २ मथ २ पच २ द्रावय २ आनय २ मम सन्निधिं हूं २ ऐं २ श्रीं २ स्वाहा ॥१
(२) ओं क्लीं ह्रीं हूं श्रीं क्रों ऐं क्रीं कामकलाकालि सर्व्वाकर्षिणि साध्यामाकर्षय स्वाहा ॥१६

पिबेत्प्रक्षालयेत्तेन मुखमात्मन एव च ।
या याः पश्यन्ति तं नार्य्यो यदि साध्वोपि भामिनि ॥
तास्ता मुह्यन्ति निर्धूतधर्म्मभर्त्तृकुलत्रपाः ।
आविष्टा इव निर्ल्लज्जास्तिष्ठेयुः साधकाग्रतः ॥
दास्यो भवाम इत्येवं वादिन्यस्ताः कुला [ २२ ख ] ङ्गनाः ।
पलाशकाष्ठसंभूतपादुकायुग्ममाहरेत् ॥
श्मशानांगारमादाय तत्र मन्त्रं लिखेदमुम् ।
तारं वाग्वादिनीवीजं कालीयं कमलार्णकम् ॥
लज्जां क्रोधं समुद्धृत्य देव्याः संबोधनं लिखेत् ।
गन्तव्यभूमिमुल्लिख्य खण्डयच्छेदयद्वयम् ॥
त्रुटयग्मं छिन्धियुगं भूतपाशाङ्कुशार्णकम् ।
सिद्धिं देहीति संप्रोच्य दापयेति पदं ततः ॥
अस्त्रत्रितयमालिख्य वह्निजायायुतो मनुः ।
लेपयित्वा स्नुहीदुग्धं पादयोः साधकोत्तमः ॥
इच्छागामी भवेद्देवि नात्र कार्य्या विचारणा ।
पूर्व्वस्यां दिशि गच्छेत् स योजनानां शतद्वयम् ॥
याम्यायां त्रिशतं विद्धि वारुण्यां च चतुःशतम् ।
उत्तरस्यां पञ्चशतं विदिक्षु शतमेव च ॥
व्रजेदलक्षितो भूत्वा यथेच्छं साधकाग्रणीः ।
परावृत्य समायाति तावदेव वरानने ॥
अतश्च खेचरीसिद्धिं शृणु सावहिता मम ।
स्वर्णक्षीरीलतामूलं ग्राह्यं चन्द्रग्रहे सति ॥
रजःस्वलाभगे स्थाप्यं दिवसं त्रितयं प्रिये ।
ततो धूपैश्च दीपैश्च नैवेद्यैस्तत्प्रपूजयेत् ॥

तावद्यत्नेन संस्थाप्यं यावत्सूर्य्यग्रहो भवेत् ।
सूर्य्यग्रहे तु संप्राप्ते खञ्जरीटासृजा प्रिये ॥
संचूर्ण्य गुटिका कार्य्या यवत्रितयसंमिता ।
भाद्रकृष्णचतुर्द्दश्यां बलिं दत्वा च कुक्कुटम् ॥
धारयीत शिखामूले मनुमेनमुदीरयन् ।
निगमादिं वाग्भवञ्च मायां कामार्णमुच्चरेत् ॥
पाशांकुशक्रोधभूतलक्ष्मीबीजानि चोच्चरेत् ।
नाम देव्याश्च [ २३क ] संबोध्य रतिमोहिनि चोल्लिखेत् ॥
वसामांसपदं चोक्त्वा रक्तप्रिय इतीरयेत् ।
खेचरं मामिति प्रोच्य कुरुयुग्मं विनिर्द्दिशेत् ॥
रक्षोभूतपिशाचेति पदमुच्चारयेत्ततः ।
ततश्च विन्यसेद्देवि सिद्धविद्याधरोरगान् ॥
समुच्चरेत्कुरुद्वन्द्वमुक्त्वा मम वशं पदम् ।
हां ह्रीं क्षां क्षूं विनिर्द्दिश्य क्रां क्रीं क्लां क्लूं समालिखेत् ॥
खेचरीसिद्धिशब्दाच्च दायिनीति पदं लिखेत् ।
त्वरयुग्मं समाहृत्य कहयुग्मं ततो वदेत् ॥
कालिकापालि सम्बोध्य क्रोधत्रितयमुल्लिखेत् ।
अस्त्रत्रितयमुच्चार्य्य स्वाहान्तो मनुरीरितः ।
ततः स खेचरो भूत्वा यादृच्छिकगतिर्भवेत् ।
सिद्धैस्साध्यैरप्सरोभिर्द्देवैश्च सह मोदते ॥
मेरुमन्दरकैलासहेमकूटहिमालयान् ।
अद्रीनारोहते सर्व्वान्प्रयोगस्यास्य शक्तितः ॥
इन्द्राग्नियमयक्षेशवरुणानिलरक्षसाम् ।
ईशस्यापि पुरं गच्छेदन्यत्रैव च का कथा ॥

न गतिस्तस्य हन्येत पातालेऽपि कदाचन ।
सर्व्वेषामप्यवध्यः स्याद् भूपातालखचारिणाम् ॥
सिद्धैः साध्यैश्च देवैश्च यक्षै रक्षोभिरेव च ।
नागैश्च दानवैर्भूतैः सह संभाषणं चरेत् ॥
वज्रकायः स्वयं भूत्वा विचरत्यवनीतले ।
न तस्याभिभवः कर्त्तुं शक्यते त्रिदशैरपि ॥
अथापरं प्रयोगञ्च वदतो मेऽवधारय ।
काम्बोजदेशसंभूतं पलषोडशसंमितम् ॥
लौहमानीय देवेशि संक्रान्तौ मकरस्य च ।
तावत्संपूजयेद्यत्नाद् यावत्कर्क्कटसंक्रमः ॥
ततो व्योका [ २३ ख ] रमाहूय स्वगृहे कारयेदसिम् ।
शुचिर्द्दिगम्बरो मुक्तचिकुरो लोहकारकः ॥
कृष्णाष्टम्यामाश्विनस्य प्रारभेतासिमुत्तमम् ।
कुर्य्याच्छनैः शनैस्तावद् यावन्मकरसंक्रमः ॥
तत आनीय तं रात्रौ कृष्णपक्षे चतुर्द्दशीम् ।
पूजां विधाय विधिवत् स्थापयेत् कालिकाग्रतः ॥
आर्त्तवेन युवत्यास्तं लेपयेदविचारयन् ।
नैवेद्यधूपदीपाद्यैर्जवापुष्पैश्च पूजयेत् ॥
स्नुहीवटार्क्कदुग्धेन विलिम्पेन्मुष्टिमेव च ।
वक्ष्यमाणेन मन्त्रेण देव्यै खड्गं समर्प्पयेत् ॥
वेदादिवाग्भवक्रोधमेघविद्युद्रमार्णकान् ।
उच्चार्य घोरनादे च दंष्ट्राविकट इत्यपि ॥
मुखमण्डन उच्चार्य्य महाघोर इतीरयेत् ।
तथा घोरतरे चैव महाशब्दाद्भयंकरे ॥

श्मशानवासिनीत्युक्त्वा योगिनीडाकिनीपदम् ।
ततः परिवृते प्रोच्य कल्पान्तेति पदं लिखेत् ॥
कालानल निगद्यैव विकराल इतीरयेत् ।
दुर्न्निरीक्ष्य ततो रूपे दशानां युगकं वदेत् ॥
गर्ज्ज विध्वंसय च्छिन्धि दम मर्द्दय पातय ।
उच्छादय शोभय च मारय द्रावयेत्यपि ॥
ततो वदेदिमं खड्गं देहि मेऽन्यङ्गनायुतः ।
ततः स्वगात्ररुधिरं देव्यै दद्यान्नृपो वलिम् ॥
ततो दद्यान्नरबलिमभावे महिषायुतम् ।
देवि कामकलाकालि सृष्टिस्थित्यन्तकारिणि ॥
देहि खड्गं भगवति त्रिलोकीविजयाय मे ।
एवं गृहीत्वानुज्ञां वै हस्ते संलाप्य यत्नतः ॥
अङ्कोलीतैलमुच्चण्डं गृह्णीयान्मन्त्रमुच्चरन् ।
करवाल महाराज [ २४ क ] सर्व्वदेवधृत प्रभो ॥
कालनेमिवधे त्वं हि विष्णुना विधृतः पुरा ।
नन्दकेति ततः संज्ञां संप्राप्तस्त्वं जगत्प्रभो ॥
इन्द्रेण जम्भसंग्रामे धृतस्त्वं कथनो भव ।
दुर्गया दुर्गसंग्रामे यदा त्वं विधृतो ह्यभूः ।
विद्युत्पातेति संज्ञां त्वमवाप्तस्तत्क्षणे विभो ।
सदेर्द्दैवगणैः सार्धं जायमाने महाहवे ॥
रावणेन धृतः पूर्व्वं चन्द्रहासस्त्वमप्यभूः ।
त्रैलोक्यविजयार्थं हि त्वमिदानीं मया धृतः ॥
वज्रघात इतीयं ते संज्ञा देव मया कृता ।
एवं मन्त्रं समुच्चार्य त्सरुं मुष्टौ निवेशयेत् ॥

स नग्न एव तिष्ठेद्धि यावदिच्छं महात्मनः ।
एवं खड्गमुपादाय यत्र युद्धे व्रजत्यसौ ॥
जयस्तत्र भवेदस्य नात्र कार्य्या विचारणा ।
साधकेन तु कर्त्तव्या केवलं चालनक्रिया ॥
स्वयमेव कृपाणोऽयं शातयत्याशु वैरिणः
यत्र यत्रैव पतति वज्रघातोऽसिपुंगव ॥
केवलं तत्र तत्रैव पतत्यशनिरेवहि ।
एकतो वज्रघातोऽयमेकतो वीरकोटयः ॥
द्रष्टुमेव न शक्तास्ते किं पुनर्योद्धुमाहवे ।
तत्कृपाणकरं ये ये पश्यन्ति रणमध्यगाः ॥
ते ते चक्षुर्मुद्रयित्वा तत्रैव निपतन्त्यथ ।
वज्रघातप्रभावोऽयं वर्णितुं नैव शक्यते ॥
तथापि किञ्चिच्चापल्यात्कथितं देवि तेऽग्रतः ।
निशुम्भशुम्भसंग्रामे देव्यै चायं धृतः पुरा ॥
ततो देवासुरे युद्धे बलिना बलिना धृतः ॥
रक्षोवानरसंग्रामे ततो रावणिना धृतः ॥
निवातकवचाख्यानाः कालकेयाभिधास्तथा ।
देवानामप्यवध्या ये हिरण्यपुरवासिनः ॥
[ २४ क ] नवत्यर्ब्बुदषट्खर्व्वनिखर्व्वशतसम्मिताः ।
वज्रघातप्रसादेन तेऽर्ज्जुनेन जिताः पुरा ॥
वीरभद्रं समाराध्य सौप्तिकानीकचारिणा ।
द्रौणिना निशि धृत्वैनमवशिष्टा निपातिताः ॥
यावच्छत्रुबलं सर्व्वं न निःशेषं भवेत्प्रिये ।
तावन्मुष्टिर्न्न च्यवति कराग्रादिति निश्चितम् ॥

खङ्गसिद्धिमिमां श्रुत्वा समरे विजयी भवेत् ।
अथाञ्जनप्रयोगं ते प्रवक्ष्यामि वरानने ॥
येनाञ्जितो निधिं पश्येदेनं कश्चन नेक्षते ।
भौमवाराप्तपञ्चत्वसूतिकाबालखर्प्परम् ॥
समानीय श्मशाने तु कज्जलं तत्र पातयेत् ।
नवनीतं भक्षयित्वा कृष्णमार्ज्जारकं सदा ॥
तद्वान्तं तत्समादाय राजीवार्क्कस्य तंतुना ।
खञ्जरीटस्य गरुता सार्द्धं वर्त्ति प्रकल्पयेत् ॥
ततस्तत्कज्जलं नीत्वा शनिवारे निमन्त्रयेत् ।
प्रातर्द्देव्यैं समर्प्याथ मन्त्रेणानेन तां जपेत् ॥
वाग्भवं कामलं क्रोधं भूतबीजमथोच्चरेत् ।
निगद्य सर्व्वसिद्धीति दायिनीति पदं वदेत् ॥
मा मां पश्यन्तु चोद्धृत्य सर्व्वाद्भूतानि चोच्चरेत् ।
स्वाहान्तं मन्त्रमुल्लिख्याञ्जयेन्नेत्रेऽविचारयन् ॥
नैनं पश्यन्ति भूतानि नैनं पश्यन्ति मानुषाः ।
नैनं पश्यन्ति गीर्व्वाणा न नागा नासुराः खगाः ॥
अयं पश्यति भूतानि परमाणुसमान्यपि ।
निधिं भूमितलगतं सर्व्वं पश्यति साधकः ॥
व्यवधानगतञ्चापि दूरदेशगतं तथा ।
तिरश्चां विरुतं वेत्ति वेत्ति चैषां च चेष्टितम् ॥
आकाशचारिणः सर्व्वान्पश्यत्येव न संशयः ।
सुभगः सर्व्वनारी [ २५ क ] णां भवेत्काम इवापरः ॥
सर्व्वत्रैवाप्रतिहतो विचरेत महीतले ।
अथ ते गुटिकासिद्धिं प्रवदामि समासतः ॥

यत्सिद्धौ सर्व्वसिद्धिः स्यादेकसिद्धया न संशयः ।
रेखायुतं स्थूलपीतं शुचिदेशगतं प्रिये ॥
पुष्करिण्युदपानस्थं भेकमेकमुपाहरेत् ।
एकस्मिन्मार्त्तिके कुम्भे नूतने तं निधापयेत् ॥
पलमेकं शुद्धसूतं (?) तन्मध्ये निक्षिपेत् प्रिये ।
मुखमाच्छादयेत्तस्य सरावेण प्रयत्नतः ॥
बहुना जतुना तच्च मुद्रयेद् वारपञ्चकम् ।
यथाचरेत् प्रयत्नेन विशेन्नाम्भो यथाण्वपि ॥
ततो लिखेदमुं मन्त्रं कुम्भे साधकसत्तमः ।
तारवाग्भवकन्दर्पवधूलज्जारमारुपः ॥
पाशप्रसादफेत्कारीभूतप्रेतामृतान्यपि ।
महाक्रोधं क्षेत्रपालं चण्डकालीयगारुडान् ॥
कालविद्युन्मेघनागरतिबीजानि चालिखेत् ।
चतुर्व्विंशतिबीजानि खेचरीसहितानि च ॥
उक्त्वा कामकलाकालि रक्ष रक्षेति चोच्चरेत् ।
आकाशबीजत्रितयं महाबीजद्वयं ततः ॥
वारुणं बीजमेकं हि प्रोच्चरेत्तदनन्तरम् ।
अस्त्रत्रितयसंयुक्तः स्वाहान्तो मनुरीरितः ॥
चलत्तोयप्रवाहायाः कुल्याया हस्तमात्रतः ।
भूमेः खनित्वा तत्राधो घटं संस्थापयेदमुम् ॥
उपरिष्टात्प्रदेयानि शर्क्कराशकलानि च ।
यथोपरि प्रवाहस्तु गच्छेत्कुर्य्यात्तथा विधिम् ।
तत्र षण्मासपर्य्यन्तं स्थापयेद् यत्नतो घटम् ।
अन्वहं भक्षयेत् तत्स्थः सूतं भेकः क्षुधान्वितः ॥

बलिस्तत्र प्रयत्नेन देयः प्रति [२५क] चतुर्दशि ।
भेकरूपेण सा देवी स्वयमेवास्ति तत्रतः ॥
तस्मात्तत्रार्च्चनं कार्य्यं देवीबुद्ध्या न संशयः ।
सूतस्तदुदरे बद्धो भवतीति सुनिश्चितम ॥
षण्मासानन्तरं देवि तत उत्थापयेत्सुधीः ।
गृहकोणे ततः स्थाप्यमन्धकारे रहस्यपि ॥
एकं हि विवरं कार्य्यं कुम्भे तत्र शनैः शनैः ।
संपिष्टहिंगुलीतोयं पलमात्रं विनिःक्षिपेत् ॥
तेन छिद्रपथा देवि मासि मास्येवमाचरेत् ।
तत्तोयं षट्पलमितं षट्सु मासेषु दापयेत् ॥
ततः संवत्सरे पूर्णे बहिर्निष्कासयेच्छनैः ।
ततोऽन्तरीक्षे तत्स्थाप्यं प्रयत्नेन विचक्षणः ॥
तत्र विघ्नकराः सर्व्वे देवदानवराक्षसाः ।
सावधानो भवेत्तस्मात्प्रतिक्षणमनन्यधीः ॥
तत्र रक्षा प्रकर्त्तव्या मन्त्रेणानेन पार्व्वति ।
कोधबीजत्रयं प्रोच्य देव्याः सम्बोधनं वदेत् ॥
यक्षराक्षसभूतेति पिशाचप्रेत इत्यपि ।
कूष्माण्डजंभकेत्येव योगिनी डाकिनीति च ॥
स्कन्द वेताल उच्चार्य्य क्षेत्रपाल विनायक ।
ततो घोणक उल्लिख्य गुह्यकेति पदं वदेत् ॥
विनायकेभ्य इत्युक्त्वा इमं घटमुदीरयेत् ।
रक्ष रक्षेति चोद्धृत्य स्वाहान्तो मन्त्र उत्तमः ॥
मन्त्रेणानेनावगुण्ठ्य कुर्य्यादिवं ततः परम् ।
कृष्णधुत्तूरवृक्षस्य पलमात्रं द्रवं शुचिम् ॥

दद्याच्च प्रथमे मासि तेन छिद्रेण साधकः ।
द्वितीये मासि तुलसी तृतीये श्रेयसीरसम् ॥
चतुर्थे मार्क्करीन्दद्यात्पञ्चमे लक्ष्मणारसम् ॥
षष्ठे हैमवतीपत्रद्रवदानं विधीयते ॥
पूर्णे ह्यष्टादशे मासि प्रदद्यान्माहि-[२७ क] षं बलिम् ।
ततो निष्कासयेद्भेकं सिंदूरारुणसंनिभम् ॥
वस्त्रैः करं वेष्टयित्वा ततस्तमवनामयेत् ।
शनैः शनैर्द्धूनयेच्च यावद्वमति दर्दुरः ॥
ततः सा गुटिका देवि सिन्दूरारुणसन्निभा ।
इन्द्रगोपादपि तथा माणिक्यशकलादपि ॥
महाशोणा भवेद्देवि तां प्रगृह्य विचक्षणः ।
प्राणप्रतिष्ठामापाद्य पूजयित्वा यथाविधि ॥
देव्यनुज्ञां समासाद्य मन्त्रेणानेन धारयेत् ।
प्रणवं शाम्भवं वीजं मायाकामाङ्कुशामृतम् ॥
सर्व्वसिद्धिमथोच्चार्य्यं देहि देहीति सञ्जपेत् ।
ततः स्वाहा पदं चोक्त्वा शिखायां बन्धयेत्ततः ॥
अव्याहतगतिर्भूत्वा यत्रेच्छा तत्र गच्छतु ।
अनेनैव शरीरेण देवत्वं प्राप्नुयान्नरः ॥
खेचरो जायते देवि तथैवादृश्यतां व्रजेत् ।
लीयते वायुभूतोऽयं वायुमध्ये न संशयः ॥
तेजो भूत्वा निविशते तेजस्येव स साधकः ।
जले प्रविष्टो भवति जलरूपो वरानने ॥
स आकाशतनुर्भूत्वाकाश एव विलीयते ।
सुमेरुशतसंकाशो गरिम्णा स भवत्यपि ॥

परमाणुसमो भूयादणिम्ना स क्षणान्तरम् ।
पिबत्यब्धिचतुष्कं स यदि देवि पिपासति ॥
चन्द्रसूर्य्यग्रहर्क्षाणि साधकश्चेद्दिधीर्षति ।
ध्रियते तत्क्षणादेव कराभ्यां स्थित एव सः ।
शापानुग्रहसामर्थ्यं भवति क्षिप्रमेव हि ।
लोकपालैः समं तस्य सम्वादो जायते मिथः ॥
तेषां पुराणि व्रजति सखा चैषां भवेदसौ ।
नागाङ्गना देवकन्या यक्षिण्योऽप्सरसस्तथा ।
तस्याग्रतः समायान्ति स्व[२६ ख] यं मदनविह्वलाः ।
जीवेत् स साधकश्रेष्ठो यावदाचन्द्रतारकम् ॥
न शक्यते समाख्यातुं महिमा मादृशा प्रिये ।
अथवा किं बहूक्तेन सत्यं सत्यं वचो मम ॥
स साक्षाद्रुद्र एवेति मन्तव्यो नात्र संशयः ।
रौप्यताम्राहिवङ्गायोराशीन् पर्व्वतसन्निभान् ॥
यद्येष स्पृशति क्षिप्रं सुवर्णन्निश्चितं भवेत् ।
यस्मात्कामकलाकालीरूपेयं गुटिका प्रिये ॥
तस्मान्नैव प्रयोक्तव्या ह्यन्यासु क्षुद्रसिद्धिषु ।
केवलं देवतात्वैककारिणीं गुटिकामिमाम् ॥
धारयेत् कालिकारूपामप्रमत्तेन चेतसा ।
अथापरं प्रयोगं च शृणु वक्ष्यामि कञ्चन ॥
कोऽपि वीरो महायुद्धे संमुखे पतितो हि यः ।
सशिरस्कं समादाय स्थापयेत् पितृकानने ॥
अथ स्वयं शुचिः स्नातः कृतनित्याह्निकक्रियः ।
रात्रौ कृष्णचतुर्द्दश्यामभीतः साधकः सुधीः ॥

वध्यमेकन्नरं चौरं समादाय व्रजेन्नृपः ।
आरुह्य तं शवं तत्र जपेन्मन्त्रमभीः शुचिः ॥
साहस्रं वा द्विसाहस्रं जपे पूर्णे कलापिनी ।
प्रविश्य तत्र कुणपं आवेशं विदधीत वै ॥
ततो नरबलिं दद्याद्देव्यै साधकसत्तमः ।
तारवाग्भवकन्दर्पप्रेतभूतामृतैः सह ॥
प्रासादाङ्कुशफेत्कारीगारुडक्षेत्रपालकैः ।
सम्बोध्य देव्या नामापि बलिं गृह्ण मुहुर्म्मुहुः ॥
सिद्धिं मे देहि संभाष्य दापयेति ततः परम् ।
स्वाहान्तं मन्त्रमुल्लिख्य दद्यादेतेन साधकः ॥
भवेतां तालवेतालौ नामानौ सेवकोत्तमौ ।
तावारुह्य व्रजेद्देवि भूर्भुवःस्वःपुरत्रयम् ॥
त [२७ क] लं रसातलं चैव पातालमुतलातलान् ।
मेरुशैलादिकांश्चैव व्रजेदेवं न संशयः ॥
अन्तः समुद्रे विशति जले तेजसि लीयते ।
आकाशपर्व्वतादींश्च भिनत्ति स्वेन तेजसा ॥
त्रैलोक्यान्तरगं स्थानं तादृशं नास्ति पार्व्वति ।
यत्रायं नैव गच्छेत् स इत्येवं निश्चयो मम ॥
अन्ये च बहवो देवि प्रयोगाः सन्ति भूरिशः ।
ते सर्व्वेऽन्वेषणीयाश्च ह्यन्यकालीविधिष्वपि ॥
इत्येते कथिता देवि प्रयोगाः सर्व्वसिद्धिदाः ॥

इत्यादिनाविरचितायां महाकालसंहितायां सामान्यविशेष प्रयोगो नाम द्विशताधिकषट्चत्वारिंशः पटलः ॥६॥

देव्युवाच ।

कर्त्तव्यं केन रूपेण स्थापनं जातवेदसः ।
देवेश तन्मे कथय महाकाल जगत्पते ॥

श्रीमहाकाल उवाच ।

शृणु देवि प्रवक्ष्यामि वह्नेः स्थापनमुत्तमम् ।
जायते सर्व्वथा येन साधकस्येप्सितं वरम् ॥
पूर्व्वोत्तरप्लवं रम्यमादौ मण्डलमाचरेत् ।
ततस्त्रिकोणषट्कोणं नवकोणमथापि च ॥
तत्तत्कार्य्यानुसारेण विदधीत विचक्षणः ।
वाञ्छाभेदा द्रव्यभेदाः काष्ठभेदा भवन्ति हि ॥
फलं फलानामन्यत् स्यादन्यदन्नस्य पार्व्वति ।
तथान्यदेव पुष्पाणामन्यदेवान्यवस्तुनः ॥
अन्यामन्यां होमकर्म्मकामनां मन्त्रविच्चरेत् ।
ध्यायन्देवीं चरेद्धोमं समिद्भिः सर्पिषा सह ॥
ततो जपं प्रकुर्व्वीत होमान्ते सर्व्वथा प्रिये ।
ततः सजपहोमाद्धि जायन्ते सर्व्वसिद्धयः ॥
अथ होमविधिं वक्ष्ये ये शास्त्रे वि [२७ ख] हिताः सदा ।
यस्य सम्यग्विधानेन सर्व्वसिद्धिः प्रजायते ॥
पूर्व्ववन्मण्डलं कृत्वा कोणं चापि यथाविधि ।
तत्राचरेच्छुचिर्भू त्वा स्थापनं जातवेदसः ॥
न्यासं करांगयोः कृत्वा ध्यात्वा देवीं हृदि स्थिताम् ।
मण्डलं कोणे ऐशान्यां होमकर्मारभेत वै ॥

विधाय विधिवत्पूजां होमकर्म्मणि मण्डले ।
अग्न आयाहि मन्त्रेण वह्नेरावाहनं चरेत् ॥
अग्नये रोचमानायेतिमन्त्रैः स्थापनं ततः ।
होमं पश्चात्प्रकुर्व्वीत समिद्भिः कुसुमैरपि ॥
फलैः पत्रैर्व्रीहिभिश्च तथान्यैरपि वस्तुभिः ।
शतमष्टोत्तरञ्चापि सहस्रं चायुतं तथा ॥
लक्षं चापि प्रकर्त्तव्यं लक्षोपरि न विद्यते ।
कामनागौरवादेव होमे गौरवमिच्छति ॥
सर्व्वत्रैव तु होमान्ते जपं कुर्य्यादनन्यधीः ।
एकेन केवलेनैव द्रव्येणान्यत् फलं भवेत् ।
अन्यदेव विमिश्रेण फलं देवि विधीयते ॥
कुसुमानां फलं सर्व्वमादौ मत्तोऽवधारय ॥
समिद्घृतमधून्मिश्रा मालतीकुसुमाहुतिः ।
बृहस्पतेरप्यधिका वागीशत्वप्रदायिका ॥
वशगाः स्युर्म्महीपाला जातीपुष्पैकहोमतः ।
मेधावृद्धिर्य्यूथिकाभिर्न्नृपत्वं नागकेशरैः ॥
माधवीभिर्म्महीलाभो हेमलाभश्च चम्पकैः ।
अतिमुक्तैर्बु द्धिवृद्धिर्म्मल्लिकाभिर्द्धनागमः ॥
कुन्दैः कीर्त्तिमवाप्नोति बन्धूकैर्ब्बान्धवप्रियः ।
जवापुष्पेण रिपवः संक्षयं यान्ति तत्क्षणात् ॥
पद्मैरायुरवाप्नोति कुमुदैः कविता भवेत् ॥
कदम्बैर्व्याधिनाशः स्यादम्लानैर्व्वृद्धिभाग्भवेत् ॥
जयप्राप्तिर्म्मरुवकैर्ग्गजलाभः कु [२८ क] कण्टकैः ।
झिण्टीभिर्हयलाभः स्यान्नौलाभो मुनिपुष्पकैः ॥

तथापराजितापुष्पैर्भवेत्सर्व्वाङ्गसुन्दरः ।
शेफालिकाप्रसूनेन सुतलाभः प्रदिश्यते ॥
शोकहानिरशोकेन वकुलैः कुलमान्यता ।
दूर्व्वया धनधान्यानि शाल्मल्या शात्रवक्षयः ॥
द्रोणपुष्पेणार्थलाभो वकपुष्पैर्द्धनागमः ।
राज्यलाभश्च पुन्नागैः कर्णिकारैर्व्वहून्नतिः ॥
दीर्घायुष्ट्वं पाटलेन तगरैः सर्व्वसाम्यता ।
पलाशकुसुमैर्होमो बहुशोऽजाविकारकः ॥
शिरीषपुष्पैः प्रमदा जयन्त्या च जयश्रियः ।
विद्वेषणं चार्कपुष्पैर्द्धत्तूरैः रिपुमारणम् ॥
कोविदारैर्व्वलावाप्तिः पारिजातैर्ज्जयोच्छ्रयः ।
अन्येषामपि पुष्पाणामन्यदन्यत्फलं भवेत् ॥
फलहोमस्यापि फलं कथयामि वरानने ।
श्रीफलैः श्रीफलावाप्तिः क्रमुकैर्भोगसञ्चयः ॥
नागरङ्गेण सौन्दर्यं पनसैः कान्तिमान् भवेत् ।
वशित्वं नारिकेलेन जम्बीरैः शत्रुसंक्षयम् ॥
आम्रेण राज्यलाभः स्यात् स्तम्भनं जाम्बवैः फलैः ।
रम्भाफलेन देवेशि सर्व्वसिद्धिरवाप्यते ॥
रिपूच्चाटः कपित्थेन वदर्य्या बलवान् रणे ।
क्षीरीफलेन तनयो द्राक्षाभिर्म्मोक्षमाप्नुयात् ॥
उदुम्बरेण धर्म्माप्तिर्व्वटेनापत्यपूर्णता ।
जातीफलस्य होमेन वशीकुर्य्याज्जगत्त्रयम् ॥
कूष्माण्डैर्ग्रहशान्तिः स्याद्वृद्धिर्द्धात्रीफलैस्तथा ।
वीजपूरेणार्थपूरो मारणञ्च विभीतकैः ॥

मोक्षः स्यादेव रुद्राक्षैर्हरीतक्यामघक्षतिः ।
लकुचैर्युवतिप्राप्तिस्तालैरुन्मादयेत् [२८ ख] द्रिपून् ॥
मधूकैर्म्महती लक्ष्मीः करमर्दैर्बलोन्नतिः ।
अन्येषां च फलानां हि भूयांसि हि फलानि च ॥
महदायुर्य्यवैर्होमे मुद्गैरन्नप्रपूर्णता ।
शालिभिस्तण्डुलैर्व्वापि सम्पत्तिर्भूयसी भवेत् ॥
सर्व्वसिद्धिस्तिलैर्होमे माषैर्म्मासे रिपुक्षयः ।
श्यामाकैस्तपसो लाभो नीवारैस्तेज उत्तमम् ॥
सर्व्वाकृष्टिः कोद्रवेण कुल्माषैरामयक्षयः ।
सिद्धार्थकैस्सर्षपैश्च सर्व्वसिद्धिः करे स्थिता ॥
दुग्धेन नृपवश्यत्वं दध्ना नृपसुतास्तथा ।
इक्षुभिश्च गुडैर्व्वापि वशीभूताः स्त्रियोऽखिलाः ॥
सर्व्वनिवाज्यहोमेन वशीकुर्य्यान्न संशयः ।
मधुना भोगभूयस्त्वं शर्कराभिर्म्महोदयः ॥
राज्यावाप्तिः पट्टवस्त्रैः कर्प्पूरैः कीर्त्तिरुत्तमा ।
विद्याधरत्वं देवत्वं सिद्धत्वं मृगनाभिना ॥
कुङ्कुमैरूपशालित्वं चन्दनैर्व्वाग्मिता भवेत् ।
सिद्धचष्टकं चागुरुणा जयो रोचनया भवेत् ॥
मुक्तया शिवसायुज्यं माणिक्येनार्कपूःस्थितिः ।
वैदूर्य्यान्नागलोकाप्तिर्व्वज्रैर्व्वज्रिपुरे स्थितिः ॥
इन्द्रनीलेन मणिना गन्धर्व्वत्वमवाप्यते ।
गोमेदैः किन्नरत्वञ्च पुष्परागेण यक्षता ॥
गारुत्मतैः प्रबालैश्च तथा मरकतेन च ।
सप्तद्वीपेश्वरत्वं हि जायते नात्र संशयः ॥

कनकेन भवेत्कान्तिर्दुर्व्वर्णेन यशो भवेत् ।
ताम्रेण भूमिलाभः स्याद्रीत्या हि कलहे जयम् ॥
नागेन विषहानिस्त्वं लोहैर्म्मारणमादिशेत् ।
लाक्षारसमयो होमः सर्व्वापत्तिनिवारणः ॥
कज्जलैरप्यधृष्यत्वं सिन्दूरैर्म्मोहनं भवेत् ।
बिल्वपत्रै [ २६ क ] र्न्नागवल्लीदलैर्ल्लक्ष्मीरवाप्यते ॥
यावत्यः सिद्धयः सन्ति तावत्यः पायसैर्भवेत् ।
अपूपैः शष्कुलीभिश्च लक्ष्मीविद्याप्तिरेव च ॥
कटुत्रयेण शत्रूणामुच्चाटनमुदीर्य्यते ।
लवणेन भवेद्द्वेषः केशैर्म्मरणमादिशेत् ॥
रजस्वलानां नारीणामार्त्तवेन वनागमः ।
रेतसा स्तम्भनं देवि मोहनं स्वमलैरपि ॥
स्वीयेनोद्वर्त्तनेनैव त्रैलोक्यं वशमानयेत् ।
उलूककाकयोः पक्षैर्म्महद्विद्वेषणं भवेत् ॥
कटुतैलस्य होमेन वशीकुर्य्याज्जगत्त्रयम् ।
धाना लाजाश्च पक्वान्नमोदनं सर्व्वकामदम् ॥
कृशरान्नैर्म्मोदकैश्च सर्वसिद्धिर्भवत्यसौ ।
कञ्चिद्विशेषं ते वक्ष्ये समिधां देवि तच्छृणु ॥
पालाश्यः समिधः शुद्धाः प्रशस्ताः सर्व्वकर्म्मणि ।
महद्धनाप्तिर्ब्बिल्वेन खादिरेण नृपो वशः ॥
वाटेन कामिनीप्राप्तिर्ब्बिद्याप्तिः पैप्पलेन च ।
औदुम्बर्य्या च समिधा खेचरत्वं प्रजायते ॥
सर्व्वज्ञत्वमपामार्गैरामलक्या महीपता ।
धूत्तूरेणारिनिधनं मुनिवृक्षैः स्थिरा मतिः ॥

शाखिभिर्व्यंञ्जियैर्म्मंध्यैर्भिन्नं भिन्नं फलं भवेत् ।
निशामयाथ देवेशि मांसहोमफलं महत् ॥
छागमांसेनार्थलाभो विद्या मेषेण लभ्यते ।
कृष्णसारस्य मांसेन भवेयुर्व्वशगा नृपाः ॥
रुरुमांसेन साज्येन कृत्वा होमं वरानने ।
सर्व्वसिद्धिमवाप्नोति देवानामपि दुर्लभाम् ॥
स्तम्भयत्यरिसैन्यानि माहिषं पललं प्रिये ।
अतीतानागतज्ञानं वाराहेण च लभ्यते ॥
शत्रुवाक्स्तम्भनं कुर्य्यादार्क्षमांसाहुतिं चर-[ २९ ख ] न ।
कापेयपललेनैव रणेऽधृष्यः प्रजायते ॥
खाड्गेनाभेद्यकवचो भूत्वा भ्रमति मेदिनीम् ।
गोधामांसस्य होमेन निधिं पश्यति भूतले ॥
सामान्यमृगमांसेन वायुतुल्यबलो भवेत् ।
राङ्कवामिषहोमेन वशे स्युर्नृपयोषितः ॥
शल्लकीपललाहुत्या कविः कविसमो भवेत् ।
गावयामिषहोमेन दीर्घमायुरवाप्यते ॥
गोमांसं मधुनालोड्य वामहस्तेन होमयेत् ।
अपि देवा वशं यान्ति किं पुनः क्षुद्रमानुषाः ॥
शाशेनादृश्यतां गच्छेत् कच्छपेनाप्नुयाद्धनम् ।
नाक्रमांसस्य होमेन विषं न लगति क्वचित् ॥
नाकुलं पललं हुत्वा वाक्सिद्धिर्भवति क्षणात् ।
मार्ज्जारमांसहोमेन कुबेरसदृशो भवेत् ॥
सिंहमांसस्य होमेन साक्षाद्विद्याधरो भवेत् ।
राज्यावाप्तिर्व्याघ्रमांसहोमेन भवति ध्रुवम् ॥

तुरगामिषहोमेन सर्व्वपृथ्वीपतिर्भवेत् ।
दुःस्वप्नहानिरोष्ट्रेन हस्तिमांसैर्म्महीपतिः ॥
गोमायुमांसहोमेन धनदेन समो भवेत् ।
विवादे जयलाभः स्याद्राज्यलाभोऽपि जायते ।
स्तम्भयत्यरिसैन्यञ्च स्त्रीणां प्रियतमो भवेत् ।
अपि सर्व्वे महीपालास्तस्य दासा न संशयः ॥
महामांसस्य होमेन किं तद् यन्न फलं भवेत् ।
गुरुणा सदृशी विद्या कुवेरादधिकं धनम् ॥
ब्रह्मणोप्यधिकं दीर्घमायुरस्य तु निश्चितम् ।
ऐश्वर्य्ये शक्रसदृशः कान्त्या चन्द्र इवापरः ॥
तेजसा रवितुल्योऽयं दुःस्पृश्योऽप्यग्निना सह ।
क्रोधे यमेन सदृशः सर्व्वसिद्ध्याकरो भवेत् ॥
बच–[ ३० क ] सा बहुना किं स्यादेतदेवावधारय ।
स देवीपुत्र एव स्यात्सिद्धादीनां तु का कथा ॥
किंतु न स्याद् द्विजातीनामेष धर्म्मो वरानने ।
नृपस्य वाथ शूद्रस्य भवेत्तत्रापि पाक्षिकः ॥
न तद्वधाद्भवेन्मांसं वधो वै घोरपापकृत् ।
घोरपापान्न सिद्धिः स्यादिति बुद्ध्या समाचरेत् ।
इदानीं पक्षिपललहोमजन्यं फलं शृणु ।
वाध्रीनसामिषाहुत्या जायते धर्म्मभाजनम् ॥
कपोतमांसहोमेन रम्यां कन्यां लभेत वै ।
भारद्वाजेन मांसेन मृतं सञ्जीवयेदसौ ॥
पारावतक्रव्यहोमात् कामिनीनां प्रियो भवेत् ।
कोयष्टिकस्य मांसेन खेचरीसिद्धिभाग्भवेत् ॥

महद्वैरं जनयति उलूकपललाहुतिः ।
साधको मद्गुहोमेन कामरूपः क्षणाद्भवेत् ॥
जंगमाजङ्गमं सर्व्वमाकर्षेच्छ्येनहोमतः ।
शतपत्रामिषैर्होमो राजानं वशमानयेत् ॥
अदृश्यः स्यात्खञ्जरीटैर्द्देवतासुररक्षसाम् ।
धनावाप्तिः सुतावाप्तिर्द्धात्तिकेन न संशयः ॥
चाषेन देवलोकादिगमनं विदधाति वै ।
कारण्डवस्य मांसेन भवेज्जातिस्मरो नरः ॥
उच्चाटनं मारणं च विद्वेषः काकमांसतः ।
हारीतमांसहोमेन पर्व्वतानुद्धरेदपि ॥
कुररक्रव्यहोमेन मूकानपि च वादयेत् ।
लावमांसस्य होमेन तेजस्वी चाग्निमान्भवेत् ॥
पिकक्रव्याहुतिः कुर्य्यात् साधकं किन्नरेश्वरम् ।
धत्ते सत्यं परपुरप्रवेशं टिट्टिभाहुतिः ॥
कुक्कुटक्रव्यहोमोऽयं सर्वोल-[३० व] क्ष्मीफलप्रदः ।
साधकस्याथ तनुते चकोरश्चिरजीविताम् ॥
कान्ताप्रियत्वं सौन्दर्य्यं क्रियते चटकाहुतिः ।
सारसो योगसिद्धिं च वितनोति वरानने ॥
कालिङ्कस्तनुते होमं आरोग्यमपराजयम् ।
चक्रवाकेन बन्धूनां सर्व्वेषामीश्वरो भवेत् ॥
कारटेन तु होमेन धनायुःकवितां लभेत् ।
हांसेन मोक्षमाप्नोति दात्यूहैरतिबुद्धिताम् ॥
तित्तिरैश्चिरजीवित्वं चातकैर्म्मोहनं तथा ।
मायूरमांसहोमेन विमानाधिपतिर्भवेत् ॥

गोधेन खड्गसिद्धिः स्याद्वकैः सौभाग्यसौख्यभाक् ।
चैलेन धातुसिद्धिः स्यात्क्रौञ्चैस्तरति दुर्गतिम् ॥
यावत्यः सिद्धयः सन्ति त्रिलोक्यां वरवर्णिनि ।
तावतीर्ल्लभते सद्यो होमं कीरामिषैश्चरन् ॥
आज्येन वापि मधुना दध्ना वा पयसाथवा ।
आमिक्षयेक्षुदण्डेन तिलैः शर्क्करयापि वा ॥
मिश्रितैराहुतिग्र्राह्या केवला न कदाचन ।
प्रसृतिर्मुख्यपक्षः स्यान्मध्यमोऽर्द्धमितो भवेत् ॥
होमकर्म्मणि चैवात्र त्रिपर्व्वप्रमितोऽधमः ।
चतुरस्रं भवेत्कुण्डं शान्तिपुष्ट्यादिकर्म्मणि ।
मारणोच्चाटने द्वेषवशीकारे त्रिकोणकम् ।
स्तम्भने मोहने वापि वर्त्तुलं कुण्डमाचरेत् ॥
भुक्तिमुक्त्यैकसिद्ध्यर्थं दीर्घं कुण्डं समाचरेत् ।
यथा यत्समये प्रोक्तं तत्र कुर्य्यात्तथाविधिम् ॥
एष ते कथितो देवि होमक्रमविधिर्म्मया ।
अथ योगविधिं मत्तः शृणु सावहिता सती ॥
जपहोमार्च्चनध्यानप्रयोगाश्चैकतो मताः ।
एकतो [ ३१ क ] वायुरोधेन देहषट्चक्रभेदनम् ॥
सदा शिवेन यः प्रोक्तः क्रमो योगविधेर्म्मम ।
तस्मिन्कृते किमेभिर्व्वा प्रयोगैः साधनैरपि ॥
यो योगेन तनूमेतां साधयेद्विधिवर्त्मना ।
परार्द्धशतजीवी स एवमाह सदाशिवः ॥
तत्रादौ देहसंस्थानमाकर्णय वरानने ।
द्वे सहस्रे तु नाडीनां वसतो देहपञ्जरे ॥

कीकसानि च तिष्ठन्ति द्वात्रिंशदिति निश्चयः ।
वायवो दश तिष्ठन्ति पञ्च तेषु महत्तराः ॥
सूर्य्याचन्द्रमसोः स्थानं देहमध्ये व्यवस्थितम् ।
आकाशभूमिसलिलवह्नीनां तत्र संस्थितिः ।
वायुस्तु सर्व्वदेहेषु चलत्येव प्रतिक्षणम् ।
यस्मात्प्रयात्यग्रणुर्भूत्वा तस्मात्प्राण इतीर्य्यते ॥
अग्निस्थानं यदेतस्मिंस्तज्जाम्बूनदसन्निभम् ।
त्रिकोणाकारतो ज्ञेयमितरेषां तु मण्डलम् ॥
त्रिकोणमग्निस्थानं यद्देहमध्यं तदुच्यते ।
यद्यत्र तिष्ठति तनौ त्वं  तदादौ निबोध मे ॥
अधो मेढ्राद् द्वयंगुलं तत्तावदेव गुदोपरि ।
एकांगुलप्रमाणं तद्देहमध्यं प्रकीर्त्तितम् ॥
देहमध्याद्वूर्ध्वमस्ति कन्दं देवि नवाङ्गुलम् ।
चतुरंगुलमुच्छ्रायमायामं तावदेव च ॥
आकारेणाण्डसदृशं त्वगस्थिपरिवेष्टितम् ।
तत्र संचरति प्राणः स्वे स्थाने परमोपरि ॥
तस्योपरिष्टाद्विज्ञेयं कुण्डलीस्थानमुत्तमम् ।
कृत्स्नो योगविधिस्तत्र सिद्धिश्चापि प्रतिष्ठिता ॥
कन्दमध्ये स्थितास्तत्र मुख्या नाड्यश्चतुर्द्दश ।
एकैकस्यां द्विचत्वारिंशच्छतं परिनिष्ठिताः ॥
तिस्रस्तास्वपि मुख्याः स्युः सुषुम्णेडाथ पिङ्गला ।
पयस्विनी सरस्वत्यो [ ३१ ख ] वारणा च कुहुस्तथा ॥
गांधारी शंखिनी पूषा हस्तिजिह्वाप्यलंबुषा ।
विश्वोदरायशस्विन्यौ मुख्या ह्येताश्चतुर्द्दश ॥

मोक्षमार्गं सुषुम्णा सा ब्रह्मरन्ध्रे प्रतिष्ठिता ।
तस्या वामे इडा ज्ञेया चन्द्रसंचारसंचिता ॥
दक्षिणे पिङ्गला नाडी रविसंचारशोभिता ।
सरस्वती कुहूश्चैव सुषुम्णापार्श्वयोः स्थिते ।
गांधारी हस्तिजिह्वा च इडायाः पृष्ठपार्श्वयोः ।
पूषा पयस्विनी चैव पिङ्गलापृष्ठपार्श्वयोः ॥
कुहोश्च हस्तिजिह्वाया मध्ये विश्वोदरा स्थिता ।
पयस्विनी कुहोर्म्मध्ये वारणा च प्रकीर्त्तिता ॥
पूषायाश्च सरस्वत्याःस्थिता मध्ये यशस्विनी ।
गांधार्याश्च सरस्वत्याः शंखिनी मध्यसंस्थिता ॥
अलंबुषा च देवेशि कन्दमध्यादधः स्थिता ।
पूर्व्वभागे सुषुम्णाया मेढ्रान्तं च कुहूः स्थिता ॥
अधश्चोर्ध्वं च विज्ञेया वारणा सर्व्वगामिनी ।
पयस्विनी च याम्यस्य पादाङ्गुष्ठाङ्गमिष्यते ॥
पिङ्गला चोर्ध्वगा याम्ये नासान्तं विद्धि पर्व्वति ।
याम्ये पूषा च नेत्रान्तं पिङ्गलायास्तु पृष्ठतः ॥
यशस्विनी नाडिका च याम्यकर्णान्तमिष्यते ।
सरस्वती तथा चोर्द्धमाजिह्वायां प्रतिष्ठिता ॥
आसव्यकर्णाद्देवेशि शंखिनी चोर्द्धगा मता ।
गान्धारी सव्यनेत्रान्तमिडायाः पृष्ठतः स्थिता ॥
हस्तिजिह्वा तथा सव्यं पादाङ्गुष्ठाङ्गमिष्यते ।
विश्वोदरा च या नाडी सव्ये सव्ये गता स्मृता ॥
अलंबुषा महाभागा पादमूलादधोगता ।
प्राणोऽपानः समानश्च उदानो व्यान एव च ।

नागकूर्म्मः कृकरश्च देवदत्तो धनञ्ज [ ३२ क ] यः ।
एते नाडीषु सर्व्वासु चरन्ति दश वायवः ॥
एतेषु वायवः पञ्च मुख्याः पूर्व्वोदिताः प्रिये ।
तेषु मुख्यतमः प्राणः कन्दस्याधः प्रतिष्ठितः ॥
मुखनासिकयोर्मध्ये हृदये नाभिमण्डले ।
कन्दमध्येऽपि च प्राणः स्वयमेवावतिष्ठते ॥
अपानो मेढ्रपायोश्च ऊरुवंक्षणजानुषु ।
जंघोदरे च कट्यां च नाभिमूले च तिष्ठति ॥
व्यानः श्रोत्राक्षिमध्ये च हृत्कट्यां गुल्फयोरपि ।
समानः सर्व्वदेहेषु सर्व्वव्यापि प्रतिष्ठितः ॥
भुक्तं सर्व्वरसं गात्रे व्यापयन्वह्निना सह ।
द्विसप्ततिसहस्रेषु नाडीमध्येषु सञ्चरन् ॥
समानो वायुरेवैकः स्थितो व्याप्य कलेवरम् ।
नागादिवायवः पञ्च त्वगस्थ्यादिषु संस्थिता ॥
निःश्वासोच्छ्वासकादिश्च प्राणकर्म्म इतीष्यते ।
अपानवायोः कर्मैतद् विण्मूत्रादिविसर्ज्जने ॥
प्राणोपादानचेष्टादि व्यानकर्म्मेति कीर्त्तितम् ।
उदानकर्म्म तत्प्रोक्तं देहस्योन्नमनादिकम् ॥
शोषणादि समानस्य शरीरे कर्म्म कीर्त्त्यते ।
क्षेपणादिगुणो यश्च नागकर्म्मेति कीर्त्तितम् ॥
निमीलनादि कूर्म्मस्य क्षुत्तृष्णा कृकरस्य च ।
देवदत्तस्य देवेशि निद्रा तन्द्रेति कीर्त्तितम् ॥
धनञ्जयस्य शोषादि सर्व्वकर्म्म प्रकीर्त्तितम् ।
ज्ञात्वैवं नाडिकास्थानं वायुयानञ्च यत्नतः ॥

नाडीनां शोधनं कुर्य्याद्यथाविधि पुरःसरः ।
ततस्तपोवनं गत्वा फलमूलोदकान्वितम् ॥
तत्र रम्ये शुचौ देशे नद्यां देवालये पि वा ।
सुशोभनं स्थलं कृत्वा सर्व्वं रक्षा समन्वितं ॥
त्रिकालस्नान संयुक्तः शुचिर्भूत्वा समा [३२ ख] हितः ।
मन्त्रैर्न्यासैर्न्यस्ततनुः सितभस्मधरः सदा ॥
समस्थलो परिकुशान्समास्तीर्य्याथ राजिनं ।
विनायकं सुसंपूज्य कुशपुष्पोदकादिभिः ॥
गुरुन्देवीन्नमस्कृत्य तत्र चावध्यचासनं ।
उदङ्मुखः प्राङ्मुखो वा पवित्रासन संगतः ॥
समग्रीव शिरः कायः संवृतास्यः सुनिश्चलः ।
सुषुम्णा वर्त्मना वायुं कुण्डलिन्यांवमेत्क्षणं ॥
गच्छत्यभिव्यक्तिमिदं नादब्रह्म सनातनम् ।
तन्नादो पिङ्गला मार्गे समानीय हृदब्जके ॥
इडया पूरयेत्ताव यावद्वर्णात्मकं भवेत् ।
भू मेरु परिधातारं रत्या विंदु समन्वितम् ॥
बिंबमध्यस्थमोंकार संपुटाकृतमुन्नतम् ।
एकीकृत्य तु तत्सर्व्वं माकर्षेद्धस्ति जिह्वया ॥
विश्वोदरालंबुषाभ्यां ब्रह्मरन्ध्रे निवेशयेत् ।
निवेश्यतां तत्र देवीं निराकारां विचिन्तयेत् ॥
एकां ज्योतिर्म्मयीं शुक्लां सर्व्वगां व्योमरूपिणीं ।
अत्यन्त निर्म्मलां शुद्धा मादि मध्यान्त वर्ज्जिताम् ॥
अतिसूक्ष्मानाकाशा मस्पृश्यातामचाक्षुषीं ।
कुटस्थामप्य दृश्यां तां सच्चिदानन्द विग्रहां ॥

अगंधमरसां स्वच्छा मप्रेयामनूपमां ।
आनंदामजराग्नित्यां सदसत्सर्व्वकारिणीम् ॥
सर्व्वाधारां जगद्या ममृत्यु चाव्ययामजाम् ।
अनवस्थामप्रतर्क्यां वह्निस्थां सर्व्वतो मुखीं ॥
सर्व्वदृक् सर्व्वतः पादां सर्व्वस्पृकार्व्वतः शिरां ।
निरञ्जनीं निर्व्विकारां शुद्धचैतन्य रूपिणीं ॥
नादोपाहृतवीजेन ध्यायेस्तत्र यजेदिमां ।
कुलाकुल समुद्भूता ममृतानन्द संचयां ॥
सूर्य्यकोटि समां शुभ्रां नादवीज तथा [३३ क] स्थितां ।
षट्चक्रभेदेन यजेद्योगे कुण्डलिनी हृदोः ॥
आधारपद्ममध्येन्तर्द्विपत्रे त्रिदलेपि च ।
स्वाधिस्थाने षोडशारे पीठे च मणिपूरके ॥
द्वादशे च विशुद्धे पि तत्राप्यष्टदले तथा ।
हृदये दशपत्रे तु द्वादशार्द्धे चतुर्द्दले ॥
कण्ठे भाले यजेद्देवीं जिह्वया नादमुच्चरन् ।
गच्छन्तीम्ब्रह्ममार्ग्गेण सूक्ष्मपट्चक्रभेदिनीं ॥
प्रद्योतदमृतं दिव्यं क्षीरधारोपमद्रवं ।
पीत्वा सदाशिवेनैव सामरस्यपदं गताम् ॥
यजेद्धयायेन्नमस्कुर्य्याद्यदिच्छेदनन्यधीः ।
सामरस्यपदं प्राप्तां यः क्षणं चिन्तयेत्सुधीः ॥
राजसूयाश्वमेधानां तेनेष्टा यज्ञकोटयः ।
काष्ठांकलां क्षणं व्याप्य यः स्थितस्तत्र साधकः ॥
वाजपेयः पुण्डरीको विश्वजित्तेन वैकृतः ।
पुनस्तेनैव मार्ग्गेण नयेत्कुण्डलिनीमथः ॥

पश्यन्त्यापरया तत्र वैखर्य्या वर्त्मनापि च ।
संयोज्यनम्बिकामार्गात्तालुमूलादधोनयेत् ॥
जिह्वयाकृष्यतां विद्यां हृदब्जे विनिवेशयेत् ।
आमूलाद्ब्रह्मरन्ध्रान्तमेकीभूतं विचिन्तयेत् ॥
हृदब्जादपि निः काश्य तथा नाडी च यादपि ।
प्रदीपकलिकाकारो कन्द एव निवेशयेत् ॥
एतदभ्यासयोगेन यत्फलं तच्छृणुष्वभो ।
न क्षुत्पिपासा न जरा न मृत्युर्न्नामयादि च ॥
पुरीषमूत्रेनैव स्यान्निद्रा तंद्रा भवेन्न च ।
यावान्दोषः शरीरस्य तेषु कोपि न जायते ॥
अतीतानागतं वेत्ति वाक्सिद्धिरपि जायते ।
सरस्वती तस्य मुखे स्वयमेत्य वसेत्सदा ॥
परार्द्धजीवी च भवेत्कामरूपी भवत्यपि ।
देवानाकर्षयेच्चापि खचरो [३१ ख] जायते तथा ॥
वर्णितुं शक्यते नास्य महिमा वर्षकोटिभिः ।
साक्षात्सरुद्रो भवति पाञ्चभौतिकदेहभृत् ॥
प्राप्नोति मोक्षमेवासौ षण्मासाभ्यन्तरे नरः ।
मोक्षैकसाधकस्यास्य विधेरन्यास्तु सिद्धयः ॥
केवलं विघ्नकारिण्य इत्येतद्विद्धि पार्व्वति ।
मूढास्तु केवलं सिद्धीरभिकांक्षन्ति नित्यशः ॥
मोक्षार्थमेव यतते धीरः संसारसागरे ।
नाड्यश्चतुर्द्दश प्रोक्ताः पूर्व्वं मुख्यतमाहि याः ॥
तासु वायुनिरोधेन भूयस्यः स्युर्हि सिद्धयः ।
तेषां प्रकारानाख्याता विस्तरत्वान्मया प्रिये ॥

केवलं सिद्धिहेतुत्वं तेषां नात्रोपयोगिता ।
विधिमेनं विधातुं यो न समर्थो विमूढधीः ॥
सचिन्तयेत्तु साकारां तां देवीं हृदयांबुजे ।
ध्यानं संप्रति वक्ष्यामि शृणु देवि समाहिता ॥
ध्यानमेव हि जन्तूनां कारणं सौख्यमोक्षयोः ।
हृत् पद्माष्टदलोपेते कन्दमूलसमुत्थिते ॥
द्वादशांगुल नालेस्मिश्चतुरंगुलमुच्छ्रिते ।
प्राणायामैर्व्विकसिते केशरान्वितकर्णिके ॥
हृत्सरोरुहमध्येस्मिन्प्रकृत्यात्मिक कर्णिके ।
अष्टैश्वर्य्यदलोपेते विद्याकेशरसंयुते ॥
ज्ञाननाले महाकन्दे प्राणायामप्रबोधिते ।
विश्वार्च्चिषं महावह्नि वमन्तीं सर्व्वतोमुखीं ॥
भयंकरी जगद्योनिं ललज्जिह्वाकरालिनीं ।
भासयन्ती स्वकन्देहमापादतलमस्तकं ॥
प्रेतभूतपिशाचादिडाकिनीयोगिनी गणैः ।
भैरवाद्यैः परिवृतां श्मशानतलवासिनीम् ॥
ज्वलत्करालज्वलनचितामध्यकृतस्थितिं ।
शवोपरि समारूढां विमुक्तचिकु [३४ क] रोच्चयां ॥
निःक्रान्तरसनाकंपप्रकंपितजगत्त्रयां ।
दन्तमण्डलनिर्ग्गच्छच्चारुचंद्रिकया तया ॥
द्योतयन्तीं जगत्सर्व्वं चन्द्रमण्डलवत्सदा ।
तुंगपीवरवक्षोजभरनम्रकलेवरां ॥
प्रत्यालीढपदां देवीमट्टहासभयप्रदां ।
पार्श्वस्थिताभ्यां फेरुभ्यांमतीवविकरालिनीं ॥

नृमुण्डमालासन्दोहकृतमालाव गुण्ठिनी ।
सद्यः कृत्तनृमुण्डाभ्यां कुण्डलद्वयशोभिनीं ॥
कठोर पीवरानील दोः षोडशविराजितां ।
नरान्त्र विहितावद्य योगपट्टपरिच्छदां ॥
दिगंबरां खर्व्वतनुं हसन्तीं कामलालसां ।
संवर्त्तकालज्वलनदुर्न्निरीक्ष्यतनुप्रभां ॥
कल्पान्तघोषमार्त्तण्डकोटिस्तम्भनकारिणीं ।
निर्व्वातदीपवत्तस्मिन्दीपतां हव्यवाहने ॥
ततस्तस्य शिखामध्ये संस्थितां जगदंबिकां ।
ध्यात्वा कामकलाकालीं मोहमस्मीति भावयेत् ॥
तद्रूपतां समासाद्य मुक्तिं तेनैव गच्छति ।
अथवा सिद्धिलिप्सा चेद्भवत्येव न संशयः ॥
ध्यायन्वै पञ्चघटिकाः सर्व्वरोगैः प्रमुच्यते ।
घटिकादशकध्यानात्पृथिव्या जयमाप्नुयात् ॥
नाडी पंचदशध्यानाद्वह्निनासौ न दह्यते ।
घटिकाविंशतिध्यानाद्वायुवद्व्योमगो भवेत् ॥
मूत्रं पुरीषं जयति पंचविंशति नाडिभिः ।
संपूर्णं दिवसेनैव सर्व्वसिद्धिः प्रजायते ॥
अहोरात्रेण देवेशि जीवन्मुक्तो भवेन्नरः ।
इति योगविधिः सर्व्वः कथितस्ते मया क्रमात् ॥
उत्तमो मध्यमः पक्षस्तथैवाधम एव च ।
उत्तमो योगमार्ग्गेण मध्यमो ध्यानसंश्रयात् ॥
पूजाध्यानादिभिर्ज्ञेयो [३४ क] ऽप्यधमाराधनक्रमः ।
कृते युगे वा त्रेतायां योग एवोत्तमो विधिः ॥

ध्यानमेव द्वापरादौ कलौ न्यासार्च्चनं खलु ।
अल्पायुषोऽल्पमेधाश्च स्वल्पप्रज्ञा महालसाः ॥
दुराचारा नास्तिकाश्च कामलोभ परायणाः ।
सुदृशाश्च नराः सर्व्वे भविष्यन्ति कलौ युगे ॥
नायं योगो महेशानि भविष्यति गुरुं विना ।
केवलं न्यासपूजादि करिष्यन्ति फलार्थिनां ॥
तथाप्यास्थावतां देवि फलं किंचित्प्रयच्छति ।
एवं ज्ञात्वा तु यः कुर्य्याद्ध्यानन्यासार्च्चनानि हि ॥
अवश्यं फलभाग्भूयान्नात्र कार्य्या विचारणा ।
ध्यानेर्च्चने जपे न्यासे होमे च बलिकर्म्मणि ॥
भावना यादृशी यस्य सिद्धिः स्यादेवतादृशी ।
इति ते कथितो देवि प्रपञ्चः कामकालिकः ॥
वद सत्यं पुनर्म्मत्तः किमन्यच्छ्रोतुमिच्छसि ॥

इत्यादिनाथविरचितायां महाकालसंहितायां होमविधियोग प्रयोगो नाम द्विशताधिक सप्तचत्वारिंशः पटलः ॥

देव्युवाच ॥

महायोगिन्महाकाल कलानिधिविभूषित ।
सर्व्वज्ञ सर्व्वलोकेश धूर्ज्जटे भक्तवत्सल ॥
त्वत्प्रसादादिदं सर्व्वं प्रयोगं कामकालिकं ।
अश्रौषं सर्व्वमेवाहं मप्रमत्तेन चेतसा ॥
अन्यद्रहस्यं यद्यत्स्यात्तच्चापि कथय प्रभो ।
आकर्णयन्त्याश्चेतो मे न तृप्तिमधिगच्छति ॥
देव्या रहस्यं यत्किंचिदेतद्व्यावर्त्तते विभो ।
तत्तत्सर्व्वमशेषेण कथय त्वं दयानिधे ॥

श्रीमहाकाल उवाच ।।

साधु देवि वरारोहे धन्यासि त्वं न संशयः ।
शृण्वन्त्या अपि ते यस्माच्छु [३५ क] श्रूषा नुक्षणं भवेत् ।।
चेतसा भक्तियुक्तेन शुश्रूषुर्य्योनसूयकः ।
तस्मै रहस्यं नाचष्टे यः सपापकृदग्रणीः ।।
तस्मात्तव प्रवक्ष्यामि रहस्यं यद्धि वेद्म्यहं ।
भक्तिश्रद्धापरायां ते नाकथ्यं विद्यते मम ।।
न चाख्ये यत्वयान्यस्य प्राणेषु विगलत्स्वपि ।
रहस्यमेतद्देवानां सर्व्वसिद्धिमभीप्सतां ।।
न कामकालिको योगो न विधानं शिवाबलेः ।
नान्यप्रयोगो न जपो न होमो न च पूजनं ।।
वक्ष्यमाणरहस्यस्य सहस्रांशं न चार्हति ।
सिद्धिमीयुः पुरैतस्याः प्रासादात्पार्थिवर्षयः ।।
पौत्सो बृहदश्वश्च सोमदत्तो बृहद्रथः ।
अजमीढः कार्त्तवीर्य्यो भद्रश्रेण्यः पुरूरवाः ।।
पृथुर्गयोरन्तिदेवो मांधाता नहुषो रघुः ।
विदूरथश्च भरतो दिवोदासः प्रतर्द्दनः ।।
कृशाश्वो यमदग्निश्च जैगीषव्यश्च देवलः ।
पैठीनसिर्व्वीतहव्यः कश्यपो भृगुरंगिराः ।।
सम्वर्त्तश्च वशिष्ठोत्रिर्व्यासः शातातपस्तथा ।
उद्दालको भरद्वाजो जाबालो जैमिनिस्तथा ।।
सप्तद्वीपेश्वरत्वं हि चक्रवर्त्तित्वमेव च ।
प्रापुः पूर्व्वं महीपालाश्चिरजीवित्वमप्यलं ।।

योगसिद्धिं तथाप्यन्ये तपस्यां सर्व्वसाधिकां ।
शापानुग्रहसामर्थ्यं प्राप्तवन्तो महर्षयः ॥
कथयामि तमेवाहं षोढान्यासं शुचिस्मिते ।
त्रैलोक्याधिपतित्वं हि यत्प्रसादात्करे स्थितं ॥
ताराक्षः कमलाक्षश्च विद्युन्माली तथैव च ।
एते ह्यासन्कृतयुगे दैतेया भ्रातरस्त्रयः ॥
तेऽतप्यंत तपो घोरं दिव्यं वर्षायुतं प्रिये ।
ततः प्रजापतिस्तेभ्यो वरं संप्रार्थितो द-[३५ ख] दौ ॥
वव्रुर्व्वरद्वयं दैत्यास्ते शौर्य्यमदगर्व्वितः ।
एकंत्वेषामवध्यत्वं सर्व्वभूतेभ्य उत्थितं ॥
द्वितीयं योजनानां त्रित्रिलक्षान्तरसंस्थितं ।
त्रयाणां त्रिपुरं भूयाद्दुर्ल्लंघ्यं त्रिदशैरपि ॥
वरं दत्वा वदद्धाता सर्व्वे शृणुत पुत्रकाः ।
सर्व्वप्रकारैः कस्याऽपि नावध्यत्वं जगत्त्रये ॥
एकेनापि प्रकारेणाघटमानेन सर्व्वथा ।
सर्व्वे स्वकीयं निधनमङ्गीकुरुत दानवाः ॥
ते विचार्य्याविदन्सर्व्वे शरेणैकेन यः क्षणात् ।
दहेत्त्रयाणां त्रिपुरं स नो मृत्युर्भविष्यति ॥
तथेत्युक्त्वा ययौ वेधा ब्रह्मलोकं सुरैर्व्वृतः ।
तेपि सर्व्वे तथा चक्रुर्य्यथा पूर्व्वं विचारितं ॥
ताराक्षस्य तु सौवर्णं पुरंसर्व्वोपरिस्थितं ।
योजनायुतविस्तीर्णं तावदेवायतं प्रिये ॥
राजतं कमलाक्षस्य योजनायुतविस्तृतं ।
दश तादृशविस्तीर्णं विद्युन्मालिन आयसं ॥

त्रि त्रिलक्षान्तरं तेषां पुरं गगनसीमनि ।
प्राकारपरिखोपेतं च याट्टालकशोभितं ॥
ध्वजगोपुरनिश्रेणी पताकायन्त्रशोभितं ।
खड्गप्रासाङ्कुशाकिकगदाकार्म्मुकधारिभिः ॥
पाशशूलभुशुण्ड्यष्टिचक्रमुग्दरधारिभिः ।
त्रिशन्निखर्व्वपद्मवृन्दनवत्यर्व्वुदकोटिभिः ॥
एकैकं पुरमाक्रान्तं दानवैर्य्युद्धदुर्म्मदैः ।
दृष्ट्वा तु तादृशीमृद्धिं देवाः सर्व्वे स वासवाः ॥
पलायां चक्रिरे केचित्केचिच्चापि तन्ययुः ।
केचिच्च युयुधुर्देवा स्तत्यजुस्त्रिदिवंपरे ॥
केचित्समुद्रं विविशुः केचिच्च गिरिगह्वरं ।
जहुः केचिद्भिया प्राणानगुः केचिच्चतुर्द्दिशं ॥
दृष्ट्वा सुराणामधिपो देवानामीदृशीं दशां ।
रुद्रं जगाम शर [३६ क] णं पुरोधाय प्रजापतिं ॥
दण्डवत्प्रणता भूत्वा ते देवाः सपितामहाः ।
ऊचुः प्रांजलयो भूत्वा पिनाकिनमुमापतिं ॥
तपस्यया वरं धातुः संप्राप्य त्रिपुरासुराः ।
बाधन्तेऽस्मान्महेशान् शैलगह्वरगानपि ॥
त्वत्तः शरण्यो नास्माकं विद्यते देव कञ्चन ।
अतो निवेदयामस्ते प्रमथाधिपते प्रभो ॥
देवांगनाः समाकृष्य नयन्ति स्वपुरं प्रति ।
निरध्वरं जगज्जातं निष्कल्पतरुनन्दनं ॥
निर्म्मनुष्या मही सर्व्वा निर्द्देवाप्यमरावती ।
निस्तोया निम्नगा जाता नीरत्नाः सागरा अपि ॥

पादपानां कोटरेषु कन्दरेषु महीभृतां ।
लीना भूत्वा वयं सर्व्वे तिष्ठामस्तद्भयार्दिताः ॥
तेषां हि शास्ता त्रैलोक्ये त्वदन्यो नास्ति कश्चन ।
तान्निहत्यासुरान्स्वर्गे पुनरस्मान्निवेशय ॥
इत्युक्तः प्रणतैः सर्व्वैर्व्विहस्य वृषभध्वजः ।
प्रत्युवाच सुरान्सर्व्वान्रथो मे कल्प्यतामिति ॥
ततो ब्रह्मा ब्रवीत्तत्र स्मितं कुर्व्वन्महेश्वरं ।
निर्म्मातव्यो रथो देव कैस्त्वदारोहणक्षमः ॥
त्वद्योढु रथनिर्म्माणे सामर्थ्यं कस्य विद्यते ।
स्वयोग्यं स्यन्दनं चास्त्रं स्वसमेवोपकल्पय ॥
इत्युक्तो ब्रह्मणा शंभु रवदद्धर्षयन्सुरान् ।
चत्वारो वाजिनो वेदाः संपूर्णमेदिनी रथः ॥
सूर्य्याचन्द्रमसौ चक्रे कूबरो गंधमादनः ।
विन्ध्यो गिरिर्न्नाभिरस्तु कैलासोक्षत्वमेव तु ॥
मेरुर्म्मे ध्वजदण्डः स्यात्सारथिर्भगवान्विधिः ।
प्रणवस्तु प्रतोदः स्यात्प्रकाशानि च रश्मयः ॥
धनुर्म्मे मन्दरो भूयात् शिञ्जिनी वासुकिर्भवेत् ।
विष्णुः शरो मे भवतु वाजे वायुर्व्वि [३६ ख] शत्वपि ॥
यमो मृत्युश्च कालश्च फली मध्ये विशन्तु च ।
वासवः शरपृष्ठे स्यात्कुबेरवरुणावुभौ ॥
भवतः पुंखसंस्थानौ लस्तके सर्व्वदेवताः ।
नासत्या वटनी संस्थौ यज्ञाः सर्व्वे पदातयः ॥
स्वेच्छयान्यच्च सकलं कल्पयामास शंकरः ।
स्वयोग्यं कवचं शंभुरलब्ध्वा चिन्तितोभवत् ॥

निमील्य त्रीणि नेत्राणि चिरं तस्थौ जगत्पतिः ।
अथ ध्यानगतो भूत्वा तुष्टाव जगदंबिकां ॥
श्रुत्वा संभेदयामासाभेद्यं कवचमात्मनः ।
ततः सोपदिदेशास्मै षोढ़ान्यासं महात्मने ॥
स्वीयं च कवचं देवी कवचत्वेन तं ददौ ।
तेनामुक्तो हरो भूत्वा जगाम त्रिपुरंप्रति ॥
अस्त्रं पाशुपतञ्चापि संधाय वृषभध्वजः ।
पुराणि त्रीणि दैत्यानां बिभेदैकेन पत्रिणा ॥
क्षणेन भस्मसाद्भूता जग्मुर्दैत्या यमालयं ।
तमेव षोढ़ान्यासन्ते प्रवदामि वरानने ॥
यदेकवारं कृत्वैव भवेत्त्रिजगती पतिः ।
प्राणव्ययेपि नान्येषां कथनीयं कदाचन ॥
षोढान्यासस्याऽस्य ऋषिस्त्रिपुरारिमहेश्वरः ।
छन्दश्च जगती प्रोक्तं दे तेयं प्रकीर्त्तिता ॥
कान्दर्पार्णन्तु बीजं स्यात्क्रोधः कीलकमुच्यते ।
माया बीजं च शक्तिः स्यात्कामना यद्वदिष्यते ॥
आदौ नृसिंहन्यासः स्याद्द्वितीयो भैरवस्य च ।
तृतीयोपि च विज्ञेयो न्यासः कामकलाभिधः ॥
चतुर्थे डाकिनीन्यासः शक्तिन्यासश्च पञ्चमे ।
षष्ठेपि देवीन्यासः स्यादथैतस्य विधिं शृणु ॥
वर्ग्गाः क च त टाः पंच षष्ठो यवलवस्तथा ।
सप्तमः श ष सा श्चापि हलक्षाश्चाष्टमः प्रिये ॥
ऋ[३७ क] षिर्नृसिंहन्यासस्य हयग्रीवः प्रकीर्त्तितः ।
गायत्रीछन्द इत्युक्तं नरसिंहोस्य देवता ॥

बीजानि वर्णा विज्ञेयाः स्वराः षोडशशक्तयः ।
विनियोगो नृसिंहस्य न्यास एवेति सम्मतः ॥
षड्भिर्दीर्घैः क्षवीजस्य करांगन्यास माचरेत् ।
पुनस्तद्वरारोहो तैरेव च षडंगकम् ॥
सविन्दु वर्गमध्यस्थः कवर्गोविंदु संयुतः ।
क्रमेणानेन देवेशि वर्गा क च वर्गयोः ॥
अष्टा वृत्यो भवेन्न्यासस्ततश्चापि निबोधमे ।
सविन्दवो हलः सर्व्वे सृष्टिमार्ग्गेण चैककं ॥
त एव तादृशा ज्ञेयाः पुनः संहारवर्त्मना ।
सृष्टिस्थितिभ्यामन्त्येपि न्यासः संपूर्ण उच्यते ॥
ज्वालामाली करालश्च भीमश्चैवापराजितः ।
क्षोभनश्च तथा सृष्टिः स्थितिः कल्पान्त इत्यपि ॥
अनन्तश्च विरूपश्च वस्त्रायुध परापरो ।
प्रध्वंसनश्च विज्ञेयो विश्वमर्द्दन इत्यपि ॥
उग्रोभद्रश्च मृत्युघ्नः सहस्रभुजइत्यपि ।
विद्युज्जिह्वा घोरदंष्ट्रा महाकालाग्निरेवच ॥
मेघनादश्च विकटस्तथापिंगलटोपि च ।
प्रदीपो विश्वरूपश्च विशुद्दशन एव च ॥
विदारो विक्रमश्चापि प्रचण्डः सर्व्वतो मुखः ।
वज्रो दिव्यश्च भोगश्च मोक्षा लक्ष्मीरपि क्रमात् ॥
विद्रावणः कालचक्रः कृतान्तस्तप्तहाटकः ।
भ्रामकश्च महारौद्रो विश्वान्तक भयङ्करौ ॥
प्रतप्तो विजयश्चापि सर्व्वतेजोमयस्तथा ।
ज्वाला जटालश्च खरनखरो नाद दारुणः ॥

निर्व्वाण नरसिंहश्चेत्येकपञ्चाशदीरिताः ।
अथ ध्यानं प्रवक्ष्यामि यत्कृत्वा न्यासमाचरेत् ॥
उद्य–[३७ ख] न्मार्त्तण्डकोट्यंशुसमारुणतनुप्रभाः ।
उत्तुकाकार पृथुलनेत्रत्रितय भूषिताः ॥
विदारिसृक्कनिर्ग्गच्छद्दंष्ट्राचन्द्रकलान्विताः ।
विदीर्णविकरालास्यनिर्य्यज्जिह्वाविराजिताः ॥
विमुक्तचामराकारसटाकेशरमण्डिताः ।
आवद्धयोगपट्टान्ताजानुन्यस्तकराम्बुजाः ॥
कोटिकल्पान्तार्क्कसमा भीमदंष्ट्राट्टहासिनः ।
कौस्तुभोद्भासि हृदयाः श्वेतपद्मोपरिस्थिताः ॥
किरीटहारकेयूरकिंकिण्यंगदशोभिताः ।
मुखैः कल्पान्तकालाग्निं वमन्तः सर्व्वतोमुखाः ॥
करालभृकुटी दृष्टि संत्रासितजगत्त्रयाः ।
नखनिर्भिन्नदैत्येन्द्ररुधिरोक्षितवाहवः ॥
विपाटितान्तानिर्ग्गच्छद्वसालिप्ताङ्कुक्षयः ।
अस्त्रैर्व्विभूषितान्दीर्घान्भुजान्षोडश बिभ्रतः ॥
शरं चक्रं गदा खड्गं पाशमंकुशमेव च ।
वज्रविदारणं चापि दक्षिणेन क्रमादपि ॥
धनुः शंखं च पद्मञ्च खेटकं मुशलं तथा ।
परशुं पट्टिशं चापि विदारणमतः परं ॥
वामेन धारयन्तस्ते रत्नाकल्पविराजिताः ।
वामजंघासन्निविष्टलक्ष्मीकाः सिद्धिदायिनः ॥
स्थिता देव्याश्चतुर्द्दिक्षु नरसिंहा वरानने ।
मातृकान्याससंस्थाने न्यसेत्साधकसत्तमः ॥

एषते कथितो देवि नृसिंहन्यास उत्तमः ।
अथातो भैरवन्यासं प्रवदामि निबोधमे ॥
अस्य भैरवन्यासस्य ऋषिस्तावत्प्रकीर्त्तितः ।
कालाग्नि रुद्रश्छन्दश्च जगती संप्रकीर्त्तिता ॥
भैरवो देवता प्रोक्ता क्रोधवीजं च वीजकम् ।
शक्तिरङ्कुशवीजञ्च देवि ते परि [३८ क] कीर्त्तितं ॥
विनियोगोस्य विज्ञेयो भैरवन्यास एव हि ।
करांगन्यासमेतस्य षडंगन्यासमेव च ॥
चण्डवीजेन कर्त्तव्यं दीर्घैः षड्भिः समन्वितं ।
आदौ तारं समुल्लिख्य द्वितीयं वाग्भवं वदेत् ॥
तृतीया तु तृतीयं स्याद्रमावीजं चतुर्थकं ।
पञ्चमं शृणिमुद्दिष्टं प्रासादं षष्ठमुच्यते ॥
सप्तमं क्रोधवीजं स्यान्महाक्रोधं तथाष्टमं ।
ततर्द्धैरवनामापि ङेन्तमुच्चारयेत्ततः ॥
पुनरप्यष्टवीजानि प्रतिलोमेन चोद्धरेत् ।
हार्द्देन मनुनायुक्तो मनुः सर्व्वार्थसाधकः ॥
पूर्व्ववन्मातृकास्थानं सर्व्वत्रैव वरानने ।
भैरवानामशो नाम गदतो मेवधारय ॥
क्रोधः श्मशानः कापाली कालः कालान्तकोरुरुः ।
महाघोरो घोरतरः संहारश्चण्ड इत्यपि ॥
हुंकारो नादिरुन्मत्तञ्चानन्दस्तदनन्तरं ।
भूताधिपः कृतान्तो सिताङ्गः कालाग्निरित्यपि ॥
उग्रायुधश्च वज्राङ्गः करालस्तदनन्तरं ।
विकरालो महाकालः कल्पान्तोपि ततः परं ॥

विश्वान्तकः प्रचण्डश्च भगमाल्युग्र एव च ।
भूतनाथश्च भद्रश्च तथा संपत्प्रदोपि च ॥
मृत्युर्य्यमान्तकश्चाऽपि ततोश्चोल्कामुखः स्मृतः ।
एकपादस्तथा प्रेतो मुण्डमाली ततः परं ॥
वटुकः क्षेत्रपालश्च ततोपि च दिगम्बरः ।
वज्रमुष्टिर्घोरनादश्चण्डोग्रोपि प्रकीर्त्तितः ॥
संद्रापनः क्षोभणश्च ज्वालासम्वर्त्त एव च ।
वीरभद्रस्त्रिकालाग्निः शोषणस्त्रिपुरान्तकः ॥
भैरवा एक पञ्चाश देते देवि प्रकीर्त्तिताः ।
ध्यानमेषाम्भैरवाणां कथ्यमानं मया [३८ ख] शृणु ॥
ज्वलद्धुत वहज्वाला श्मशानस्थलचारिणः ।
पादालंविजटाभारा मसीपुंजसमप्रभाः ॥
ज्वलद्धुताकुण्डनिभलोचनत्रयभूषिताः ।
लंवोदराः पिंगजटाः स्थूलाः खर्व्वकलेवराः ॥
नृमुण्डमालाघटितहारग्रैवेयकोज्ज्वलाः ।
मज्जासृग्मांसमेदोस्थिवसासम्पूरिताननाः ॥
घोरदंष्ट्रालजिह्वाः करालमुखमण्डलाः ।
शवोपरिकृतावासा अट्टहास भयानकाः ॥
द्विशीर्षाश्च त्रिशीर्षाश्च तथा विंशतिमौलयः ।
शतशीर्षास्त्रिपादाश्च बहुपादा अपादकाः ॥
त्रिशूलचक्रपरिघगदामुसलतोरणान् ।
भुशुण्डीचापविशिखपाशपट्टिशमुद्गरान् ॥
परश्वङ्कुशखट्वांग्रभिदपालेष्ट्ययोगुडान् ।
कुन्तप्रासहुनायष्टिशक्ति छुरिककर्त्तृकान् ॥

मुण्डिनीचर्म्मकणय नागपाशाङ्कुशकाः ।
घंटाखर्प्परपाषाणास्तथा तर्ज्जनमेव च ॥
धारयन्तः करैः सर्व्वे व्याघ्रचर्म्मावगुण्ठिताः ।
एवं ध्यात्वा न्यसेद्देवि मातृकान्यासवर्णवत् ॥
एष द्वितीयस्ते प्रोक्तो भैरवन्यास उत्तमः ।
अतः कामकलान्यासं समाकर्णय भाविनि ॥
चिकीर्षयापि यस्य स्याद्देवी प्रत्यक्षरूपिणी ।
अस्य कामकलाख्यस्य न्यासस्य जगदम्बिके ॥
ऋषिश्च दक्षिणामूर्त्तिर्म्महादेवः प्रकीर्त्तितः ।
छन्दश्चबृहती ख्यातं देवता सा प्रकीर्त्तिता ॥
मैयं कामकलाकाली कामार्णं बीजमुच्यते ।
रतिबीजं हि शक्तिः स्याद्विनियोगं च मे शृणु ॥
देवि कामकलान्यासे एवमेव प्रकीर्त्तयेत् ।
[३६ क] कराङ्गन्यासमादध्यात्षडङ्गन्यासमेव च ॥
धराख्ढेण विधिना षड्दीर्घेनाचरेदिमं ।
अथ मन्त्रं निबोधास्य न्यासस्य जगदम्बिके ॥
पाशाभूतं समुद्धृत्य फेत्कारीं प्रेतमुद्धरेत् ।
कालीञ्च गारुडं कालं विद्युन्मेघौ समाहरेत् ॥
अमृतं नागबीजञ्च खेचरीञ्च ततो वदेत् ।
रतित्रयं कामयुगं ङेन्ता कामाभिधा ततः ॥
ततश्च मूलमन्त्रः स्यात्त्रिरतिः कामयुक्ततः ।
हार्द्देन मनुना युक्तस्त्रैलोक्यैश्वर्य्यसाधकः ॥
आद्योनङ्गः समाख्यातस्ततः कन्दर्प्प उच्यते ।
रतिप्रियः पञ्चशरः सुरतातुर इत्यपि ॥

मनोभवस्ततो ज्ञेयः कुसुमायुध इत्यपि ।
चित्ततर्ज्जन इत्येवं मन्मथस्तदनन्तरं ॥
संमोहनो यौवनेशो मदनस्तदनन्तरं ।
हृत्क्षोभकश्चाकर्षकः कलिवल्लभ एव च ॥
चित्तविद्रावणश्चापि दर्प्पको भ्रामकस्तथा ।
त्रिलोकी वशकारी च मकरध्वज इत्यपि ॥
उन्मादकोऽधकारी च चण्डवेगस्ततो वदेत् ।
मारउच्चाटनश्चापि तथा व्यामोहदाय्यपि ॥
पुष्पधन्वा स्मरश्चापि ततः सन्तापनः स्मृतः ।
मनःप्रमाथी भगदो मीनकेतुरितः परं ॥
उपस्थगो योनिवासी तथा मनसिजोपि च ।
पुष्पचापो यौवतेशस्तथा विश्वोपताप्यपि ॥
वसन्तमित्रो मलयकेतुश्चेतः प्रमादनः ।
क्रथनश्चण्डतेजाश्च धर्म्माधर्म्मप्रवर्त्तकः ॥
कोमलायुध इत्येवं प्रमर्द्दन इतः परं ।
त्रिलोकी सुखदः पश्चात्पिकदुंदुभिरेव च ॥
अलिमाली जगज्जेता कामान्ते च प्रकीर्त्तितः ।
कामा इत्येकपञ्चा [३६ ब] शद्देव्याः पारिषदाः स्मृताः ॥
शृणु देवि ध्यानमेषां यद्ध्यात्वा न्यासमाचरेत् ।
रत्नसन्दोहसंशोभिकिरीटोज्ज्वलमौलयः ॥
माणिक्यशकलोद्भासं कुण्डलद्वयशोभिताः ।
शरत्पार्व्वणशीतांशुसमानमुखदीप्तयः ॥
माणिक्यखंडभ्रमकृद्दन्तमण्डलमण्डिताः ।
विशाललोचनयुगाः श्यामकुञ्चितमूर्द्धजाः ॥

कङ्कणाङ्गदकेयूरमुक्ताहारविराजिताः ।
वल्गत्कुण्डलसंशोभिकपोलद्वयराजिताः ॥
गौरा हसन्तश्चपलाः सर्व्वे सर्व्वाङ्गसुन्दराः ।
पौष्पं चापं करे वामे दक्षिणे पंचसायकान् ॥
दधतश्चित्रवसना मञ्जीररणितांघ्रयः ।
पिककोकिल झंकार वसन्तमलयानिलैः ॥
सेव्यमाना मुदास्वस्वशक्त्यालिङ्गितमूर्त्तयः ।
सर्व्वे देव्याश्च पुरतो नृत्यन्तः सस्मिताननाः ॥
तत्तत्कलाभिः सहिता ध्यातव्याः सिद्धिदायिनः ।
अथ प्रवक्ष्ये ते देवि डाकिनीन्यासमुत्तमं ॥
यदाचरन्नरो याति समग्रैश्वर्य्यपात्रतां ।
न्यासस्य डाकिनीनाम्नो विरूपाक्ष ऋषिर्म्मतः ॥
पंक्तिश्छन्दः समाख्यातं डाकिन्यो देवता अपि ।
वीजं तु डाकिनीवीजं खेचरी शक्तिरुच्यते ॥
डाकिनीन्यास एवास्य विनियोगः प्रकीर्त्तितः ।
षड्दीर्घैर्ड्डाकिनीवीजैः षडङ्गन्यासमाचरेत् ॥
वाग्भवं च पराकूटं मायां लक्ष्मीं ततः परं ।
क्रोधवीजं वधूवीजं योगिनीवीजमेव च ॥
शाकिनी कामवीजे च धनदावीजमेव च ।
काली चण्डांकुशार्णञ्च वीजानीह त्रयोदश ॥
सनाम डा—[४० क] किनी ङेन्तं सर्व्वशेषेनमः पदं ।
मातृकान्यासवत्स्थानमासां देवि प्रकीर्त्तितं ॥
डाकिनीनां च नामापि गदतो मेवधारय ।
महारात्रिः कालरात्रिर्व्विरूपा च कपालिनी ॥

महोत्सवा गुह्यनिद्रा ततो दोर्द्दण्डखण्डिनी ।
वज्रिणी शूलिनी चापि विमला च महोदरी ॥
कुरुकुल्या कौमुदी च कौलिनी कालसुन्दरी ।
वलाकिनी फेरवी च ज्ञेयाडमरुका तथा ॥
घटोदरी भीमदंष्ट्रा ततश्च भगमालिनी ।
मेना तारावती भानुमती तदनुकीर्त्तिता ॥
एकानंगा केकराक्षीन्द्राक्षी संहारिणा तथा ।
प्रभञ्जना भ्रामरी च प्रचण्डाख्यपराजिता ॥
विद्युत्केशी महामारी शोषिणी वञ्चनल्यपि ।
सूची तुण्डी जृंभका च तीव्रा प्रस्वापनी ततः ॥
ज्वालिनी चण्डघण्टा च लम्बोदर्य्यग्निमर्द्दिनी ।
एकदन्तोल्कामुखी च सूर्पजिह्वा च घोणकी ॥
पूतना वेगमाला च ततो जालंधरी मता ।
एकपञ्चाशदित्येता डाकिन्यः परिकीर्त्तिताः ॥
नमस्कृताः स्तुता ध्याताश्चयच्छन्त्युत्तमां श्रियं ।
विपरीतेन विधिना साधकं भक्षयन्ति तं ॥
ध्यानं ब्रवीम्यथैतासां यत्कृत्वा न्यासमाचरेत् ।
काश्चिद्बन्धूकसदृशाः काश्चिन्नीलघनप्रभाः ॥
काश्चिन्मार्त्तण्डविभ्राभ देहद्युतय ईरिताः ।
काश्चित्स्फटिकखण्डाभाः काश्चित्स्वर्णसमप्रभाः ॥
दीर्घकर्णचलद्घोरनृमुण्डाङ्कितकुण्डलाः ।
शुष्कस्तनकपोलोरोजंघाग्रीवामुखोदरीः ॥
नरास्थिकृतसर्व्वाङ्गभूषणा घोरदर्शनाः ।
ज्वलच्चित्ताग्निजिह्वाभजटामण्डलमण्डिताः ॥

अर्द्धचन्द्रसमुद्भासि ललाट [४० ख] तटपट्टिकाः ।
विदीर्णमुखनिर्गच्छज्जिह्वादंष्ट्राविराजिताः ॥
पादालंबिजटाभारा श्मशानस्था दिगंबराः ।
भूतप्रेतपिशाचाद्यैः सज्जन्त्यः कामलालसाः ॥
दोर्भ्यामादाय कुणपा निलन्त्यः पितृकानने ।
त्रासयन्त्यस्तर्ज्जन्त्यो जगदेतच्चराचरं ॥
दीर्घैर्भुजैर्द्धारयन्त्यः शस्त्रास्त्राणि च भूरिशः ।
वाणान्धनूंषि परिघान्कृपाणांस्तोरणान्गदाः ॥
खट्वाङ्गानि त्रिशूलानि कुठारान्मुद्गरानपि ।
भिन्दिपालान्भुसुण्डीश्च शक्तीश्चक्राणि पट्टिशान् ॥
हुनाः प्राशांश्च कणपान्मुशलानङ्कुशान् गुडान् ।
चर्म्माणि घंटाडमरुन्भेरीजर्ज्जरमर्द्दलान् ॥
सवसासृक्पलास्थीनि खर्प्पराणि बहूनि च ।
नृत्यन्तश्चच्चरीशब्दैः प्रकम्पितजगत्त्रयाः ॥
कोटिविद्युद्दुर्न्निरीक्ष्यज्वलच्चपलतारकाः ।
दीर्घातिशुष्ककठिनगर्त्ता भुग्नकलेवराः ॥
देव्याः परिषदीभूता बद्धांजलिपुटद्वयाः ।
किंकर्य्य आज्ञाकारिण्यः सर्व्वादेव्याः पुरः स्थिताः ॥
एवंरूपाः प्रधातव्या डाकिनीन्यासकारिणा ।
अतः शृणु वरारोहे शक्तिन्यासमनुत्तमं ॥
यदाचरन्सिद्धिमिष्टामाप्नोति शतवासरैः ।
शक्तिन्यासस्य देवेशि ऋषिः कपिल उच्यते ॥
छन्दोनुष्टुप्समाख्यातं देवता शक्तयस्त्विमाः ।
लज्जाबीजं तु बीजं स्याच्छक्तिश्च कमलार्णकं ॥

न्यासस्य विनियोगोस्य शक्तिन्यासे प्रकीर्त्तितः ।
अन्न्यारुढाकाशबीजैः षडंगन्यासमाचरेत् ॥
षड्भिर्द्दीर्घैः समेतैश्च करांगन्यासमेव च ।
तारमायारमाक्रोधकालीकामांकुशामृतैः ॥
शक्तिनाम चतुर्थ्यन्तं दत्वा तदनुकीर्त्त [४१ क] येत् ।
कवर्ग्गाद्यार्णयुगल मवर्ग्गेणान्वितं प्रिये ॥
ततः प्रासादमुद्धृत्य महाक्रोधं च गारुडं ।
अस्त्रत्रितयमुद्धृत्य स्वाहान्तो मनुराडसौ ॥
चवर्ग्गवर्ग्गयोरेवं टवर्ग्गावर्ग्गयोरपि ।
तवर्ग्गर्व्वर्ग्गयोरेवं पवर्ग्गं ल्ववर्ग्गयोरपि ॥
यवर्ग्गवर्ग्गयोः पश्चाच्छवर्ग्गो वर्ग्गयोरपि ।
स्वरान्त्यवर्ग्गसंयुक्तो हवर्ग्गस्तदनन्तरं ॥
पुनः स्वरान्तमुच्चार्य्य वर्ग्गान्तित्र्यक्षरं वदेत् ।
आवृत्तयश्चतस्रः स्युः सर्व्वशेषविवर्ज्जितं ॥
उक्ता मयैते शक्तीनां मन्त्राः सर्व्वार्थसाधकाः ।
नामानि तासामधुना समाकर्णय पार्व्वति ॥
सूक्ष्मा जया तथा माया प्रभा च विजया पुनः ।
सुप्रभा नन्दिनी पश्चाद्विशुद्धिः कान्तिरुन्नतिः ॥
कीर्त्तिर्व्विभूतिर्हृष्टिश्च व्युष्टिः सन्नतिरुन्नतिः ।
ऋद्धिरुत्कृष्टिरजिता तथा चैवापराजिता ॥
नित्या सरस्वती श्रीश्च स्मृतिर्ल्लक्ष्मीरुषा धृतिः ।
बुद्धिः श्रद्धा मतिर्म्मेधा विद्या प्रज्ञा प्रकीर्त्तिता ॥
इच्छा क्रिया तथा माया दीप्ता प्रीतिस्ततः परं ।
नीतिः सृष्टिः स्थितिर्ज्ञेया संहृतिश्चेतनापि च ॥

सत्या शान्ती रतिर्भद्रा रौद्री ज्येष्ठा च विद्युता ।
एकपञ्चाशत्तमा च ज्ञेया शक्तिः परापरा ॥
इत्येताः शक्तयः सर्व्वा देव्याः पारिषदाः मताः ।
देव्यास्तनौ च सन्निवष्टा ध्यानमासां निशामय ॥
निरंकपूर्णिमापूर्णचन्द्रविंवसमाननाः ।
विशालफुल्लराजीवदलशोणायतेक्षणाः ॥
विलसद्रत्नताटंकश्रवणाभरणोज्वलाः ।
मन्दारमालासंनद्धधम्मिल्लभरगर्व्विताः ॥
विशालजघनाभोगा अति [४१ क] क्षीणकटिस्थलाः ।
कठोरपीवरोत्तुङ्गवक्षोजयुगलान्विताः ॥
रत्नमञ्जीरकेयूरकङ्कणाङ्गदशोभिताः ।
किङ्किणीहारमुकुटमुद्रिकावलयान्विताः ॥
त्रैलोक्यसारसौन्दर्य्ययौवनोन्मादगर्व्विताः ।
सिंहासनसमारूढा विचित्रविविधाम्वराः ॥
स्वच्छशीतांशुशकलविराजितललाटिकाः ।
सुशुक्लमाल्यललिताः स्व स्व चेटीगणैर्व्वृताः ॥
गौरांगदेहसंशोभिचन्दनागुरुचित्रकाः ।
सुस्मितोद्भासिवदनचञ्चद्दशनपंक्तयः ॥
कराभ्यां धारयन्त्यस्ता वराभयमनुत्तमं ।
न्यसनीयस्थानगता देव्यास्तु तत्तनौ प्रिये ॥
एवं ध्यात्वा चरेन्न्यासं सर्व्वकामार्थसिद्धये ।
अथ षष्ठो वरारोहे देवीन्यासः प्रकीर्त्त्यते ।
षोढान्यासः समस्तोपि यत्र देवि प्रतिष्ठितः ॥

वक्तुं न शक्यो महिमा यस्य वर्षायुतैरपि ।
या जामले कृतोद्धारा डामरे याः प्रकीर्त्तिताः ॥
भीमातन्त्रे च याः प्रोक्ताः याः प्रोक्ताः कौलिकार्णवे ।
देव्यस्ता एकपंचाशत्समन्त्रध्यानपूर्व्विका ॥
न्यसनीयास्तनौ देवि तासां मंत्रं समुच्चरेत् ।
देवीन्यासस्यास्य ऋषिः सदाशिव इतीरितः ॥
जगत्यनुष्टुब्बृहती गायत्रीपंक्तयोपि च ।
छन्दांसि कथितानीह देवता परिकीर्त्तिता ॥
देवी कामकलाकाली बीजकामस्य वर्ज्जिता ।
क्रोधबीजं तु शक्तिः स्याद्विनियोगः प्रकीर्त्तितः ॥
देवीन्यास कामबीजैः षडंगन्यासमाचरेत् ।
कराङ्गन्यासमेतैश्च षड्दीर्घैराचरेद्बुधः ॥
आदौ नाम वदाम्यासां मन्त्रध्याने ततः परं ।
कथ [४२ क] यिष्यामि विविवत्सावधानं मनः कुरु ॥
आदौ ज्ञेया महालक्ष्मीस्ततो वागीश्वरी मता ।
अश्वारूढा च मातंगी नित्यक्लिन्ना ततः परम् ॥
भुवनेशी तथोच्छिष्ट चाण्डाली भैरवी ततः ।
शूलिनी वनदुर्गा च त्रिपुटात्वरिता ततः ॥
अघोरा जयलक्ष्मीश्च वज्रप्रस्तारिणी ततः ।
पद्मावत्यन्नपूर्णा च कालसंकर्षणी ततः ॥
धनदा कुक्कुटी भोगवती च शबरेश्वरी ।
कुब्जिका सिद्धलक्ष्मीश्च बाला च त्रिपुरा ततः ॥
तारा दक्षिणकाली च छिन्नमस्ता त्रिकण्टकी ।
ततो नील पताका च चण्डघण्टा ततः परं ॥

चण्डेश्वरी भद्रकाली गुह्यकाली ततः परं ।
अनङ्गमाला चामुण्डा वाराही वगलापि च ॥
जयदुर्गा नारसिंही ब्रह्माणी वैष्णवी ततः ।
माहेश्वरी तथेन्द्राणी हरसिद्धा ततोपि च ॥
फेत्कारी लवणेशी च नाकुली मृत्युहारिणी ।
ततः कामकलाकालीत्येकपञ्चाशदीरिताः ॥
एकैकस्या महादेव्या मूलमन्त्रेण साधकः ।
अकारादि क्षकारान्त स्थानेषु न्यसनं चरेत् ॥
अथासां मूलमन्त्रांस्तान्क्रमादुद्धारयाम्यहं ।
ध्यानञ्च मन्त्रानुपदं यदाम्नायेषु कीर्त्तितं ॥
वाग्भवं कामलं मायां कामबीजन्ततः परं ।
चतुरक्षर मंत्रोयं महालक्ष्म्याः प्रकीर्त्तितः ॥
पूर्णचन्द्राननां लक्ष्मीमरविन्दोपरिस्थितां ।
गौरांगी विविधाकल्प रत्नाभरण मण्डितां ॥
क्षौमावद्ध नितंबान्ताम्वराभयकरद्वयां ।
श्वेतैश्चतुर्भिर्द्विरदैः शुण्डदण्ड निवेशितैः ॥
हिरण्मयामृतघटैः सिच्यमानां विभा [४२ ख] वयेत् ।
अथ वागीश्वरी मन्त्र स्तारं माया च वाग्भवः ॥
पुनर्म्माया पुनस्तारो ङेन्तापि च सरस्वती ।
अन्ते हृन्मनुनाज्ञेयो मन्त्रोह्येकादशाक्षरः ॥
ध्यायेद्वागीश्वरीं देवीं हंसारुढां हसन्मुखीं ।
पूर्णेन्दुवदनां कुन्द कर्प्पूर सित विग्रहां ॥
अर्द्धेन्दु विलसद्भालां दिव्याभरणभूषितां ।
विशाल लोचनां तुङ्गस्तनीं स्मित मनोहराम् ॥

पीयूषकुंभं विद्याञ्च वामे सम्बिभ्रतीं शिवां ।
वीणा मक्षगुणान्दक्षे धारयन्तीं चतुर्भुजां ॥
त्वाध्या तु मूलमन्त्रेण साधको न्यास माचरेत् ।
अश्वारूढा तृतीयास्यादस्यामन्त्रं निबोध मे ॥
तारं लज्जां रमां क्रोधं कामं पाशन्ततः परं ।
अश्वारूढा चतुर्थ्यन्ता ततोस्त्रद्वितयं वदेत् ॥
वह्निजायान्तगो मन्त्रो ज्ञेयः पंच दशाक्षरः ।
ध्यानञ्चास्याःकथ्यमानं निबोध वरवर्णिनि ॥
पूर्णशारदशीतांशुसमानवदनां शिवां ।
सन्तप्तकाञ्चनाभासां विशालाम्बुजलोचनां ॥
व्यालंवमानवेणीकां स्थितां जवनवाजिनि ।
करे च दक्षिणे वाणं वामे रश्मिं च वाजिनः ॥
चन्द्रखण्डलसद्भालां वेत्रं पद्मं च बिभ्रतीम् ।
निशामयाथ मातङ्गीमन्त्रं सर्व्वार्थसाधकं ॥
वाग्भवं च त्रपा लक्ष्मीस्ततः प्रणव एव च ।
नमो भवगवतीत्युक्त्वा मातङ्गेश्वरि चोद्धरेत् ॥
ततः सर्व्वजनेत्येवं मनोहरि पदन्ततः ।
पुनः सर्व्वमुखेत्युक्त्वा रञ्जिनीति समुद्धरेत् ॥
तत उच्चारयेदेवं सर्व्वराजवशङ्करि ।
सर्व्वस्त्रीपुरुषेत्युक्त्वा वशंकरि ततो वदेत् ॥
सर्व्वदुष्टमृगानाथ्य ततश्चापि वशङ्करि ।
[४१ क] ततोपि चोद्धरेदेवं सर्व्वसत्ववशंकरि ॥
सर्व्वलोकममुं मे च वशमानय चेत्यपि ।
शिरोन्तोमनुरुद्दिष्टो वश्यकर्म्म फलप्रदः ॥

रत्नपीठोपरिगतां सान्द्रनीरदसच्छविं ।
शृण्वतीं कीरपोतस्य कलभाषितमुत्तमं ॥
न्यस्तैकपादां कमले बालेन्दुकृतशेखरां ।
करपल्लवयुग्मेन वीणावादनतत्परां ॥
आपादपद्मलंविन्या रम्यां कल्हारमालया ।
तिलकोद्भासिवदनां वारुणीपानविह्वलां ॥
अथ धारय चेतस्त्वं नित्यक्लिन्ना मनोमनः ।
प्रणवं वाग्भवं वीजं मायिकन्तदनन्तरं ॥
नित्यक्लिन्ने समुद्धृत्य ततोपि च मदद्रवे ।
सवाग्भवत्रपस्वाहामनुः पञ्चदशाक्षरः ॥
रक्ताङ्गीयौवनोद्भिन्नपीनवक्षोरुहद्वयां ।
त्रिनेत्रां मदिरापानविह्वलाङ्गींशिवप्रियां ॥
रक्ताऽङ्गरागवसनाभरणां सस्मिताननां ।
बालेन्दुमौलिमरुणसरोरुहकृतस्थितिं ॥
कल्पवल्लीं कपालञ्च वामतो बिभ्रतीं शिवां ।
पाशाङ्कुशादौ दक्षिणे च धारयन्तींविचिन्तयेत् ॥
शृणु षष्ठीं महादेवीमतस्त्वं भुवनेश्वरीम् ।
पाशलज्जाङ्कुशैरेव मन्त्रस्त्र्यक्षर एव च ॥
महिमा वर्णितुं देवि न शक्यस्त्रिदशैरपि ।
भुवनेशीमथध्यायेत्सिन्दूरारुणविग्रहां ॥
त्रिलोचनां स्मेरमुखीं चन्द्रार्द्धकृतशेखरां ।
पीनवक्षोरुहद्वन्द्वां सर्व्वाभरणशोभितां ॥
माणिक्य रत्नकुम्भस्थसव्यपादां करद्वये ।
बिभ्रतीं रत्नचषकं रक्तोत्पल मथापि च ॥

अथ वक्ष्येहमुच्छि[४३ ब]ष्टचाण्डालीमन्त्रमादृतं ।
आदौ संबोधने देव्याः सुमुखी तद्वदेव च ॥
ततो देवि महाप्रोच्य वदेत्पश्चात्पिशाचिनी ।
माया बीजं विसर्गेण सहितं च अर्थ ततः ॥
द्वात्रिंशत्यक्षरो मन्त्रः सर्व्वसिद्धिविधायकः ।
ध्यानमस्याः प्रवक्ष्यामि यथावज्जगदीश्वरी ॥
शवोपरि समासीनां रक्तांवर परिच्छदां ।
रक्तालंकार संयुक्तां नीलमेघसमप्रभां ॥
ईषद्धास्यसमायुक्तां गुञ्जाहारविराजितां ।
षोडशाब्दाञ्च युवतीं पीनोन्नत पयोधरां ॥
कपालकर्त्तृकाहस्तां सर्व्वाभरण भूषितां ।
अथ ब्रवीमि भैरव्या मंत्रमागम गोपितं ॥
यन्नकस्य चिदाख्यातं न कस्मा अपि केन च ।
न कीलितं न शप्तञ्च स्तम्भितं च कैरपि ॥
पञ्चकूटात्मिकाविद्या मुद्धरामि शृणुष्वतां ।
खं खपूर्व्वो विधिर्भूमि स्तार्त्तीयकविराजितः ॥
नभोवह्निविधिक्षोणीसर्वाह्निवनदार्णकं ।
तृतीयं कुटं फेत्कारी चतुर्थी शांकरी भवेत् ॥
पञ्चमी व्योमकुटाख्या सर्व्वकामफलप्रदा ।
कथयामि ध्यानमस्या यद्विधायन्यसेत्तनुं ॥
उद्यत्सहस्रमार्त्तण्डकान्तिमिन्दुकलोज्वलां ।
त्रिनेत्रां पीनवक्षोजां पद्मासनपरिस्थितां ॥
सर्व्वाभरणसम्पूर्णां पूर्णयौवनशालिनीम् ।
चतुर्भुजां जपवटीं दक्षिणे विभ्रतीं वरं ॥

वामे विद्यामभीतिं च धारयन्तीं विचिन्तयेत् ।
अथाकर्णय शूलिन्या मन्त्रं ध्यानञ्च पार्व्वति ॥
ज्वलयुग्मं समुद्धृत्य वदेत्तदनु शूलिनी ।
दुष्टग्रह समाभाष्य क्रोधबीजमथोद्धरेत् ॥
अस्त्रं शिरः [४४ क] स्तुतः पञ्चान्मनु पञ्चदशाक्षरः ।
ध्यायेन्मृगेन्द्रमारूढां सतोयजलदच्छवि ॥
त्रिनेत्रां बिभ्रतीं भालं चन्द्रखण्डावतंसितं ।
ददतीं द्विषतां भीतिं युद्धोद्यतकलेवरां ॥
देवीमष्टभुजां घोरभृकुटीभीषणाकृतिं ।
पद्मं गदां धनुर्म्मुण्डं वामे संबिभ्रतीं क्रमात् ॥
त्रिशूलं करवालं च विशिखं पाशमेव च ।
धारयन्तीं दक्षिणेन सर्व्वालंङ्कार मण्डितां ॥
कृपाणखेटकौ दोर्भ्यां बिभ्रतीभिरहर्न्निशं ।
कन्यकाभिश्चतसृभिः सेव्यमानां विचिन्तयेत् ॥
अथातो वनदुर्गायाप्प्रवक्ष्ये मनुमुत्तमं ।
तारं वाग्भवमुद्धृत्य लक्ष्मीं लज्जां च योगिनीम् ॥
क्रोधमंकुशमुल्लिख्य शिरोन्तोयं नवाक्षरः ।
कालाभ्र समदेहानां सिंहस्कन्धो परिस्थितां ॥
मौलिबद्धेन्दुशकलां कटाक्षैः शत्रुभीतिदां ।
त्रिनेत्रां पीवरोरोजां स्मेरवक्त्रां चतुर्भुजां ॥
शंखं चक्रं गदां खड्ग मुद्वहन्तीं हरप्रियां ।
पूजयन्तीं जगत्सर्व्वं स्वतेजोभिर्व्विचिन्तयेत् ॥
त्रिपुटाया मनुर्व्वीजै स्त्रिभिर्ल्लक्ष्मी त्रपास्मरैः ।
ध्यानं वदाम्यथतस्याः सर्व्वसिद्धि विधायकं ॥

गौरांगीरत्नमञ्जीर काञ्चीग्रैवेयकोज्वलां ।
रत्नमौलिं त्रिनयना मर्द्धेन्दुकृतशेखरां ॥
चतुर्भुजां रक्तवस्त्रगन्धमाल्यानुलेपनां ।
रक्तोत्पलं चापपाशौ वामतो दधतीं शिवां ॥
दक्षिणेप्यङ्कुशं पुष्प बाणान् संबिभ्रतीं तथा ।
प्रवदामि मनूद्धारं त्वरिताया अतः परं ॥
प्रणवं मायिकं बीजं क्रोधबीजमतः परं ।
पाशमंकुशबीजं च वधूबीजमतः परं ॥
पुनः क्रोधं ततोन्त्या [४४ ब] र्णं युञ्जीताधोदतंस्वरं ।
पुनर्म्माया तदन्तेस्त्रं मन्त्रः प्रोक्तो दशाक्षरः ॥
कथ्यमानमथध्यानं समाकर्णय पार्व्वति ।
इन्द्रनीलशिलाखण्डतुल्यावयवरोचिषं ॥
पत्राच्छादितवक्षोजनितम्बजघनस्फिचं ।
गुञ्जाहारसमुल्लासिपीवरोरोजयुग्मकां ॥
अलंकारतयाबद्धान्भुजगानष्ट बिभ्रतीं ।
ताटंकांगदमञ्जीरहारकुण्डलतामितान् ॥
मयूरपिच्छसम्बद्धकपालकृतशेखरां ।
किरातवेषं दधतीं त्रिनेत्रां जगदम्बिकां ॥
वराभयोद्यतकरां कृपास्मेरमुखांबुजां ।
अथ घोरामनुंवक्ष्ये येन सिद्ध्यन्ति साधकाः ॥
करामलकवद्विश्वं यस्य संस्मरणादपि ।
मायारमांकुशानङ्गवधूवाग्भवगारुडैः ॥
योगिनीशाकिनीकालीफेत्कारीक्रोधबीजकैः ।
संबोधनमघोरायाः सिद्धिं मे देहि चोद्धरेत् ॥

ततश्च दापयेत्युक्त्वा स्वाहान्तो मनुरिष्यते ।
पञ्चविंशत्यक्षरोयं मन्त्रो वाञ्छितसिद्धिकृत् ॥
अथ ध्यानं व्याहरामि येन मन्त्रः प्रसिद्धयति ।
सुस्निग्धकज्जलप्रावतुल्यावयवरोचिषं ॥
विशालवर्त्तुलारक्तनयनत्रितयान्वितां ।
श्वेतास्थिकृताकल्पसमुज्वलतनुच्छविं ॥
दिगंबरां मुक्तकेशीं नृमुण्डकृतकुण्डलां ।
शवोपरि समारूढां दंष्ट्राविकटदर्शनां ॥
द्विभुजां मार्ज्जनीसूर्प्पहस्तां पितृवनस्थितां ।
जयलक्ष्मीमन्त्रमतो ब्रवीमि परमेश्वरि ॥
वाग्भवं भुवनेशीं च लक्ष्मीः कामसदा शिवाः ।
जयलक्ष्मि ततो ब्रूयाद्युद्धे मे विजयं वदेत् ॥
देहि प्रासादपाशौ च श्रृणिवीजम [४६ क] तः परं ।
अस्त्रत्रितयसंयुक्तं शिरस्तदनुकीर्त्तयेत् ॥
जयलक्ष्मीमथो ध्यायेदासीनां कमलोपरि ।
विद्युत्कनकवर्णाभां मुक्तादामविराजितां ॥
पृथुलोत्तुंगवक्षोजां लोचनत्रितयान्वितां ।
चतुर्भुजां पद्मयुगं वराभयमथापि च ॥
दधतीं कौस्तुभोद्भासिहृदयांचिन्तयेत्परां ।
व्याहराम्यथ देवेशि वज्रप्रस्तारिणीमनुं ॥
तारत्रपारमाकामप्रासादांकुशवीजकैः ।
सम्बोधनं ततो देव्याः स्वाहान्तो मनुरीरितः ॥
रत्नसिन्धौ रत्नपोतोपरि देवीं निषेदुषीं ।
कमले द्वादशदले सन्निविष्टां हसन्मुखीं ॥

रत्नाङ्गीं रत्नमुकुटां चन्द्रखण्डविराजितां ।
स्तनभारावनम्राङ्गीविशालनयनत्रयां ॥
षड्भुजां रत्नखचितरक्तांबरविराजितां ।
बीजपूरधनुःपाशान्दक्षिणे दधतीं शिवां ॥
अङ्कुशस्मरकोदण्डकपालानि च वामतः ।
विचिन्त्यैवं जगद्धात्रीं न्यासङ्कुर्य्यादतन्द्रितः ॥
मायामादौ समुद्धृत्य पद्मावतिपदन्ततः ।
शिरोमन्त्रान्वितो ज्ञेयो मन्त्रः सप्ताक्षरो महान् ॥
अरुणामरविन्दस्थां फुल्लपद्मसमाननां ।
कराभ्यान्दधतीं रक्तोत्पलद्वन्द्वं त्रिलोचनां ॥
अथ वक्ष्येन्नपूर्णाया मन्त्रं सप्तदशाक्षरं ।
मायाबीजं समुद्धृत्य नमो भग इतीरयेत् ॥
वति माहेश्वरि ततोप्यन्नपूर्णे समाहरेत् ।
वह्निजायायुतो मन्त्रो महदन्नसमृद्धिकृत् ॥
विचित्रवसनान्देवीमरुणामंबुजासनां ।
स्तनभारावनम्राङ्गीं नवचन्द्रार्द्धशेखराम् ॥
प्रमथाधिपमालो[४५ ख]क्य प्रहृष्टवदनांबुजां ।
हेमभाण्डं रत्नदर्व्वीन्दधतीं करयोर्द्वयोः ॥
अथ प्रवक्ष्ये देवेशि कालसंकर्षणीमनुं ।ः
यन्न ज्ञातं न चाख्यातं कस्मै चिदपि केन च ॥
तारत्रपारमाकामवाग्भवांकुशकालिकाः ।
पाशक्रोधमहाक्रोधप्रासादामृतगारुडाः ॥
फेत्कारीधनदाचण्डयोगिनीशाकिनीधनैः ।
विद्युद्रतिप्रेतभूतखेचरीकालपन्नगाः ः॥

कालसंकर्षणि प्रोच्य क्रोधयुग्मं ततः परं ।
स्वाहान्तो मन्त्रराजोयं मतः षड्विंशदक्षरः ॥
ध्यानं वदामि ते देवि तत्र चेतो निवेशय ।
धनाघनप्रभां देवीं पितृकाननचारिणीं ॥
प्रज्वलत्पावकचिताशवमध्यनिषेदुषीम् ।
अग्निकीलालसमया जटया गुल्फसंस्पृशा ॥
विमुक्तया शोभमानां शोणनेत्रत्रयान्वितां ।
अतिघोरतरत्र्यस्थिभूषणोज्वलविग्रहां ॥
पीवरापघनांखर्व्वां लंबमानमहोदरीं ।
छिन्नचन्द्रकलातुल्यदंष्ट्राकोटिभयंकरां ॥
लेलिहानमहाशोणप्रकम्पिरसनां शिवां ।
विस्रस्तकेशमनुजकपालकृतकुण्डलां ॥
शुष्कैर्न्नरास्थिभिः शुभ्रैर्व्विहिताशेषभूषणां ।
मयूरपिछनिचयछादितोरुकटिस्थलां ॥
मृतब्रह्मादिगीर्व्वाणकपालरचितस्रजं ।
कृत्वाट्टहासं धावन्तीं पीनोन्नतपयोधरां ॥
विदीर्णसृक्कयुगलां व्यात्तघोराननां सदा ।
सर्व्वशस्त्रास्त्रसम्पूर्णषट्त्रिंशद्दोर्विराजितां ॥
पद्मचर्म्मधनुःपाशाङ्कुशानपि वरानने ।
भिन्दिपालं तथा प्रासं घण्टां कण [४६ क] पमेव च ॥
शंखमुष्टिं च डमरुमक्षमालां क्रमेण च ।
रक्तकुम्भं नृमुण्डञ्च शत्रुजिह्वां ततः परं ॥
खर्प्परं चाभयं वामे दधतीं भीषणाकृतिं ।
त्रिशूलखड्गविशिखचक्रशक्तिगदा अपि ॥

मुद्गरं परिघं कुन्तं तथा मुशलतोमरौ ।
परश्वधं नागपाशं भुशुण्डीं पट्टिशं तथा ॥
खट्वांगं कर्त्तृकां दक्षे वहन्तीं च तथावरं ।
करालाभिः परिवृतांडाकिनीनवकोटिभिः ॥
कालसंकर्षणीनाम्नीं कल्पान्ते क्षयकारिणीं ।
कोटिविद्युद्द्भिरीक्ष्यां देवैर्हरिहरादिभिः ॥
एवं ध्यात्वा न्यसेद्देवीं चतुर्व्वर्ग्गफलप्रदां ।
अथातो धनदामंत्रं व्याहरामि तवाग्रतः ॥
महाकालसमारूढ़ः क्षेत्रपालो वरानने ।
वामकर्णान्वितं बीजं सद्य एव वसुप्रदं ॥
देवीं कोकनदारूढां विकचाब्जसमाननाम् ।
कृतपद्ममहापद्मनिधिकुण्डलयुग्मिकां ॥
मञ्जीरतापन्नशंखमकराख्यनिधिद्वयां ।
रत्नकङ्कणतापन्नमुकुन्दनिधिकच्छपां ॥
ललाटबिंदुतापन्नविराजत्कुन्दसेवधिं ।
त्रिलोचनां नीलनिधिकृतहारां हसन्मुखीं ॥
अञ्जलिद्वितयेनापि ददतीं सर्व्वतो धनं ।
सर्व्वालङ्कारसंयुक्तां विचित्रवसनां परां ॥
चिन्तयेद्धनदां देवीं वाञ्छितार्थफलप्रदां ।
प्रवक्ष्ये कुक्कुटीमंत्रं सद्यः प्रत्ययकारकं ॥
वाग्भवं मायिकं बीजं लक्ष्मीं काममनूच्चरेत् ।
फेत्कारीं क्रोधमुल्लिख्य कुक्कुटीति ततो वदेत् ॥
काली पाशाङ्कुशानुक्त्वा शाकिनीचण्डमुच्चरेत् ।
सा[४६ क]स्त्रद्वयं शिरः पश्चाद्विज्ञेयोष्टादशाक्षरः ॥

इयं वै कुक्कुटी विद्या गुप्ता सर्व्वागमेष्वपि ।
स्कन्देनोपासिता पूर्व्वं तारकस्य जयेप्सुना ॥
अब्धौ रत्नमये पोते रत्नसिंहासनस्थितां ।
श्यामां त्रिनेत्रां कुटिलकुन्तलभ्रूविराजितां ॥
माणिक्यशकलद्योतिदन्तमण्डलमण्डितां ।
रत्नाभरणनद्धाङ्गीं चतुर्द्दोर्व्वल्लिशोभितां ॥
कुक्कुटीं खर्प्परं वामे बिभ्रतीं शशिशेखरां ।
खड्गं च कर्त्तृकां दक्षे धारयन्तीं शुचिस्मितां ॥
चिन्तयित्वा चरेन्न्यासं शृणु भोगवतीमथ ।
पाशाङ्कुशौ समुद्धृत्य प्रासादान्तो मनुर्म्मतः ॥
अक्षरो जगतीमध्ये सर्व्वसौख्यप्रदायकः ।
अरुणामरविन्दास्यामतिपीनपयोधरां ॥
शेखरीकृतशीतांशुरत्नमौलिं त्रिलोचनां ।
वराभयकरां शान्तां सितपद्मोपरिस्थितां ॥
कथयाम्यथ देवेशि विद्यान्तां शवरेश्वरीम् ।
तारं त्रपां तथा पाशं ङेन्ता च शवरेश्वरी ॥
युक्तो हृन्मनुनाप्यन्ते महामन्त्रो दशाक्षरः ।
श्यामापर्णावृततनुर्ग्गुञ्जाहारविराजिता ॥
स्मेरा षोडशवर्षीयावतंसितलतादला ।
वैणवं भाजनं वामे कटेरुपरि बिभ्रतीं ॥
फलानि चिन्वती दक्ष करेण विपिनावनौ ।
वराटककृताकल्पा गायन्ती सर्व्वविग्रहा ॥
भक्तिभावतया देवी ध्यातव्या शवरेश्वरी ।
अथातः कुब्जिकामंत्रमाकर्णय वरानने ॥

नवकूटात्मिका चिन्ता चिन्तामणिरितीरिता ।
आदौ वैहाय संकूटं वायवीयं द्वितीयकं ॥
आग्ने [४७ क] यकूटं तार्त्तीयं फेत्कारीतुर्य्यमुच्यते ।
पञ्चमं वारुणं कूटं शांकरं षष्ठमुच्यते ॥
सप्तमं हंसकूटं स्यात्पराकूटमथाष्टमं ।
नवमं डाकिनीकूटं गुप्तं सर्व्वागमेष्वपि ॥
पूर्व्वमेव विशेषोस्याः कथितस्त्वयि पार्व्वति ।
अतो विशिष्य नो वच्मि तथाप्युक्तं समासतः ॥
ध्यानं पूर्व्वोदितङ्कुर्य्याद्यथा देवि मयोदितं ।
त्वं चतुर्व्विंशतितमां सिद्धिलक्ष्मीमथो शृणु ॥
लज्जां क्रोधं शाकिनीं च योगिनीम्प्रेतमेव च ।
कालीमथांकुशं वीजं शाकिनीं कामिनीमपि ॥
लक्ष्मीचण्डञ्च कालञ्च वैद्युतं भुजगार्णकं ।
स्वाहान्तः षोडशार्णोयं मन्त्रोमृतफलप्रदः ॥
श्वेतां श्वेतशवारूढां नृमुण्डकृतकुण्डलाम् ।
पञ्चवक्त्रां महारौद्रीं प्रतिवक्त्रत्रिलोचनां ॥
व्याघ्रचर्म्मावृतकटिं शुष्कावयवभूषितां ।
आवद्धयोगपट्टाञ्च नरास्थिकृतभूषणां ॥
हस्तैः षोडशभिर्द्दीप्तां विस्रस्तघनकुन्तलां ।
खड्गं बाणं तथा शूलं चक्रं शक्तिं गदामपि ॥
जपमालां कर्त्तृकाञ्च विभ्रती दक्षिणे भुजे ।
फलकं कार्म्मुकं नागं पाशं परशु मेव च ॥
डमरुं फेरुपोतञ्च नरमुण्डं कपालकम् ।
उद्वहन्तीङ्करे वामे दीर्घसर्व्वाङ्गभीषणां ॥

कृत्वा ध्यानं न्यसेदङ्गे बालामाकलयाधुना ।
आदौ वाग्भवमुद्धृत्य कामबीजं ततः परं ॥
सकारोश्रोदन्तयुतो महासेनविराजितः ।
अक्षरः परमो मंत्रो विद्यैश्वर्य्यप्रदायकः ॥
[४७ ख] समुद्यद्रविबिंबाभामरुणक्षौमधारिणीं ।
फुल्लराजीववदनां पीनोत्तुंगपयोधरां ॥
रत्नकेयूरताटंकमुक्ताहारविराजितां ।
त्रिनेत्रां बालशीतांशुखण्डशोभिललाटिकां ॥
पद्मोपरि समासीनां बालां देवीं चतुर्भुजां ।
विद्यामभीतिं वामेन दक्षे ऽजपवटीं वरं ॥
धारयन्तीं जगद्धात्रीं सर्व्वदैव हसन्मुखीं ।
संचिन्त्य न्यसनं कुर्य्यादप्रमत्तेन चेतसा ॥
अथाकर्णय देवेशि विद्यां त्रिपुरसुंदरीं ।
यत्र प्रतिष्ठिताः सर्व्वे तंत्रा डामरजामलाः ॥
यतः परतरा विद्या न भूता न भविष्यति ।
केनापि नैव शप्तेयं नैव केन च कीलिता ॥
तत्तेहं संप्रवक्ष्यामि यथावदुपधारय ।
सव्योमसब्रह्मभूमित्रपार्णराद्यकूटकं ॥
व्योम सब्रह्म गगनभेदिनी भुवनेश्वरी ।
द्वितीयकूटमुद्दिष्टं विद्याराज्यफलप्रदं ॥
सक्रोधीशपिनाकीश लज्जा बीजान्त्यसंयुतं ।
तृतीयकूटमुद्दिष्टं सर्व्वसिद्धिविधायकं ॥
एषा प्रकाशिता विद्या लोपामुद्राभिधायिनी ।
यस्याः संस्मरणेनापि किं कार्य्यं नैव सिद्ध्यति ॥

कथ्यमानं मया देवि ध्यानमस्या निशामय ।
उद्यच्चन्द्रोदयक्षुब्धरक्तपीयूषवारिधेः ॥
मध्येहेममयी भूमी रत्नमाणिक्यमण्डिता ।
तन्मध्ये नन्दनोद्यानं मदनोन्मादनं महत् ॥
नित्याभ्युदितपूर्णेन्दुज्योत्स्नाजालविराजितं ।
सदा सह वसन्तेन कामदेवेन रक्षितं ॥
कदंबचूतपुन्नागनागकेशरचंपकैः ।
बकु [४८क] लैः पारिजातैश्च सर्व्वर्तुकुसुमोज्वलैः ॥
ॐकारमुखरैर्भृङ्गैः कूजद्भिः कोकिलैः शुकैः ।
नानावर्णैस्थान्यैश्च द्विजसंघैर्न्निषेवितं ॥
शिखिकारण्डहंसाद्यैर्न्नानापक्षिभिरावृतं ।
नानापुष्पलताकीर्णैः शोभितं वृक्षखण्डकैः ॥
पर्य्यन्तदीर्घिकोत्फुल्लकमलोत्पलसंभवैः ।
रजोभिधूसरैः सम्यक्सेवितं मलयानिलैः ॥
ध्यात्वैतन्नन्दनोद्यानं तदन्तः प्रांगणं स्मरेत् ।
शुद्धकांचनसंकाशवसुधाभिरलंकृतं ॥
पांगणं चिन्तयित्वेत्थं सुरसिद्धनिषेवितं ।
तन्मध्ये मण्डपं ध्यायेद्व्याप्तब्रह्माण्ड मण्डलं ॥
सहस्त्रादित्यसंकाशं चतुरस्त्रसुशोभितं ।
रत्नतेजःप्रभापुंजपिंजरीकृतदिङ्मुखं ॥
मध्यान्तं भवनिर्म्मुक्तं कोणस्तम्भसमन्वितं ।
महामाणिक्यवैदूर्य्यरत्नकाञ्चनभूषितं ॥
मुक्तादामवितानाढ्यं रत्नसोपानमण्डितं ।
मन्दवायुसमाक्रान्तं गंधधूपतरङ्गितं ॥

रत्नचामरघंटादिवितानैरुपशोभितं ।
जातीचम्पकपुन्नागकेतकीमल्लिकादिभिः ॥
रक्तोत्पलसिताम्भोजमाधवीभिः सपुष्पकैः ।
बद्धाभिश्चित्रमालाभिः सर्व्वत्र समलंकृतं ॥
तिर्य्यगूर्ध्वलसद्रत्नं पुत्तलीकोटिमण्डितं ।
नानारत्नादिभिर्द्दिव्यैर्न्निर्म्मितं विश्वकर्म्मणा ॥
तन्मध्ये भावयेन्मंत्री पारिजातं मनोहरं ।
स्वर्णादिरत्नभूमिं च बालुकां काञ्चन प्रभां ॥
उद्यदादित्यसंकाशं व्याप्तब्रह्माण्डमण्डपं ।
शतयोजनविस्तीर्णं [४८ ख] ज्योतिर्म्मन्दिरमुत्तमं ॥
चतुर्द्वारसमायुक्तं हेमप्राकारमण्डितं ।
रत्नोपक्लृप्तसंशोभिकपाटाष्टकसंयुतं ॥
नवरत्नसमाक्लृप्ततुंगगोपुरतोरणं ।
हेमदण्डशिखालंबि ध्वजावलिपरिस्कृतं ॥
मध्यकोणस्थितस्तंभनवरत्नसमन्वितं ।
महामाणिक्यवैदूर्य्यरत्नचामरशोभितं ॥
मन्दवायुसमाक्रान्तं गंधधूपैरलंकृतं ।
बहुचामरघंटादिवितानैरुपशोभितं ॥
कल्पवृक्षे गिरेः पार्श्वे छत्रं तन्मण्डपोपरि ।
सुवर्णसूत्रै रचितं तन्मध्ये रत्नमण्डपं ॥
तन्मध्ये स्फुरितं ध्यायेन्निश्शृंगज्योतिरुत्तमं ।
तस्य मध्ये महाचक्रं पीयूषपरिपूरितं ॥
रत्नसिंहासनन्तस्या विद्यामध्ये स्मरेच्छुभं ।
विरिंचिविष्णुरुद्रेशरूपपादचतुष्टयं ॥

सदाशिवमयं साक्षात्वस्मिन्परशिवात्मकं ।
पुष्पपर्य्यंकमाश्चर्य्यं.......................॥
तन्मध्ये योनिमध्यस्थे श्रीमदोद्यानपीठके ।
पर्य्यङ्कबद्धविलसत्स्वस्तिकासनशालिनीं ॥
ध्यायेत्परशिवांकस्थां पद्ममध्योज्ज्वलाकृतिं ।
त्रिपुरासुन्दरीन्देवीं बालार्क्ककिरणारुणां ॥
जवाकुसुमसंकाशां दाडिमीकुसुमोपमां ।
पद्मरागप्रतीकाशां कुङ्कुमोदकसन्निभां ॥
स्फुरन्मुकुटमाणिक्यकिंकिणीजालमण्डितां ।
कालालिकुलसंकाशकुटिलालकपल्लवां ॥
प्रत्यग्रारुणसंकाशवदनांभोजमण्डलां ।
किंचिदर्द्धेन्दुकुटिलललाटमृदुपट्टिकां ॥
पिनाकधनुराकारसुभ्रुवं परमेश्वरीं ।
आनन्दमुदितोद्योतल्लीलान्दोलितलोचनां ॥
स्फुरन्मयूखसंघातविलसद्धेमकुण्डलां ।
स्वगण्डमण्डलाभोगजितेन्द्वमृतमण्डलां ॥
विश्वकर्म्मादिनिर्म्माण सु [४६ क] श्रसुस्पष्टनासिकां ।
ताम्रविद्रुमबाभविरक्तोष्ठीममृतोपमां ॥
दाडिमीबीजपंक्त्याभदंतपंक्तिविराजितां ।
स्मितमाधुर्य्यविजितमाधुर्य्यरससागरां ॥
अनौपम्यगुणोपेतच्चिवुकोद्देशशोभितां ।
कंबुग्रीवां महादेवीं मृणाललिलतैर्भुजैः ॥
रक्तोत्पलदलाकारसुकुमारकरांबुजां ।
करांबुजनखज्योतिर्व्विद्योतितनभस्तलां ॥

मुक्ताहारलतोपेतसमुन्नतपयोधरां ।
त्रिवलीवलिनायुक्तमध्यदेशोपशोभितां ॥
लावण्यसरिदावर्त्ताकारनाभिविभूषितां ।
अनर्घ्यरत्नघटितकांचीयुक्तनितंबिनीम् ॥
नितंबबिंबद्विरदरोमराजिवरांकुरां ।
कदलीललितस्तंभसुकुमारोरुमीश्वरीं ॥
लावण्यकदलीतुल्यजंघायुगलमण्डितां ।
गूढगुल्फपदद्वन्द्वप्रपदाजितकच्छपां ॥
ब्रह्मविष्णुशिरोरत्ननिघृष्टचरणांबुजां ।
तनुदीर्घांगुलीभास्वन्नखचन्द्रविराजितां ॥
शीतांशुशतसंकाशकान्तिसन्तानहासिनीं ।
लौहितसिन्दूरजवादाडिमरागिनीं ॥
रक्तवस्त्रपरीधानां पाशाङ्कुशकरोद्यतां ।
रक्तपुष्पनिविष्टां च रक्ताभरणमण्डितां ॥
चतुर्भुजांत्रिनेत्रां च पंचबाणधनुर्द्धरां ।
कर्पूरशकलोन्मिश्रताम्बूलापूरिताननां ॥
महामृगमदोद्दामकुंकुमारुणविग्रहां ।
सर्वशृंगारवेषाढ्यां सर्व्वालङ्कारभूषितां ॥
जगदाल्हादजननीं जगद्रञ्जनकारिणीं ।
जगदाकर्षणकरीं जगत्कारणरूपिणीं ॥
सर्व्वमंत्रमयीं देवीं सर्व्वसौभाग्यसुन्दरीम् ।
सर्व्वलक्ष्मीमयीं नि [४९ ख] त्यांपरमानन्दनन्दिताम ॥
प्रदीपैः पूर्णकुंभैश्च सर्वतः समलंकृताम् ।
हैमीभिः पालिकाभिश्च साङ्कुराभिरलंकृताम् ॥

रत्नपीठस्थितैर्दिव्यैरागमैः परिशोभिताम् ।
तदन्तरान्तराप्रोद्यन्मणिदर्पणमङ्गलाम् ॥
मधुरोदारविविधगांधर्वस्तोत्रबृंहिताम् ।
शृंगाररससन्नद्धैर्नवयौवनलंपटैः ॥
अमरीनिकरैर्नानामणिभूषणभूषितैः ।
वीणावेणुमृदंगादिवादनेन च नृत्यकैः ॥
प्रीणयद्भिर्महादेवीमप्सरीभिः परितः सदा ।
देवीं ध्यात्वान्यसेदेवं सर्वान्कामानवाप्नुयात् ॥
अथावक्ष्ये महादेव्यास्ताराया मंत्रमुत्तमं ।
मायाबीजं निःसकारं वधूबीजं ततः परम् ॥
क्रोधबीजमथोच्चार्य शेषेस्त्रं प्रतिपादयेत् ।
ध्यानमस्याः समासेन कथ्यमानंनिबोध मे ॥
प्रत्यालीढपदांघोरां मुण्डमालाविभूषितां ।
खर्व्वां लंबोदरीं भीमां व्याघ्रचर्मावृतोरुकाम् ॥
नवयौवनसम्पन्नां पञ्चमुद्राविभूषिताम् ।
चतुर्भुजांमहादेवीं ललज्जिह्वांवरप्रदाम् ॥
खर्गकर्त्तृं धरां दक्षे तथोत्पलकपालके ।
वामतो बिभ्रतीन्देवीं दंष्ट्राघोरतराननां ॥
पिङ्गोग्रैकजटां ध्यायेन्मौलावक्षोभ्यभूषितां ।
कुणपं वामपादेन चाक्रम्य परिनिष्ठितां ॥
नीलेन्दीवरमालाभिः संशोभिचिकुरोच्चयां ।
नीलमेघाभभुजगपरिनद्धजटाभरां ॥
जवाकुसुमसंकाशभुजङ्गकृत कुण्डलां ।
धूमप्रभमहानागकृतकेयूरमण्डलाम् ॥

तप्तकाञ्चनरुड्भोगिविहितोज्वलकंकणां ।
दूर्व्वादलश्यामनागकृतयज्ञोप [५० क] वीतिनीम् ॥
हिमकुन्दाभभोगीन्द्र विराजिकटिसूत्रिणीं ।
पाटलीकुसुमाभाहि कृतमंजीरशोभितां ॥
प्रज्वालपिन्तृभूमध्यगतां दंष्ट्राकरालिनीं ।
सावेशस्मेरवदनां अलंकारविभूषितां ॥
सद्यः कवित्वफलदां सद्यो राज्यफलप्रदां ।
भवाब्धितारिणीं तारां चिन्तयित्वा न्यसेन्मनुं ॥
अथ दक्षिणकाल्यास्तु मंत्रमुद्धारयाम्यहं ।
यदेकवारस्मरणात्किन्तद्यत्र करेस्थितम् ॥
आदौ वीजत्रयं काल्यास्ततः क्रोधयुगं वदेत् ।
लज्जा वीजद्वयं प्रोच्य वदेद्दक्षिणकालिके ॥
पुनर्वीजत्रयं काल्याः क्रोधवीजद्वयं पुनः ।
लज्जा युगं वह्निजाया द्वाविंशत्यक्षरो मनुः ॥
धन्यः सोपि नरो लोके यः सकृत्प्रोच्चरेदमुम् ।
महिमावर्णितुं देवि न शक्योस्यकथंचन ॥
विस्तारोस्याः पूर्व्वमेव देवि ते वर्णितोमया ।
ध्यानंपूजादिकं सर्व्वं कथितं तत्प्रसंगतः ॥
किञ्चिद्ध्यानं प्रवक्ष्यामि तस्या ध्यानक्रमागतं ।
ज्वलत्पावककीलालश्मशानचितिमध्यगां ॥
करालवदनां घोरां मुक्तकेशीं चतुर्भुजां ।
कालिकां दक्षिणां दिव्यां मुण्डमालाविभूषितां ॥
नागयज्ञोपवीतां च चन्द्रार्द्धकृतशेखरां ।
जटायुक्तां घोररूपां महाकालसमीपगाम् ॥

सद्यश्छिन्नशिरः खड्गवामोर्ध्वाधः करांबुजाम् ।
अभयं वरदञ्चापि दक्षिणाधोर्ध्वपाणिकां ॥
महामेघप्रभां श्यामां तथा चैव दिगंबरां ।
कण्ठावसक्तमुण्डालीगलद्रुधिरचर्च्चितां ॥
कर्णावतंसतानीतशवयुग्मभयानकां ।
[५० ख] घोरदंष्ट्राकरालास्यां पीनोन्नतपयोधरां ॥
शवानां करसंघातैः कृतकाञ्चींहसन्मुखीं ।
स्टक्कद्वन्द्वस्रवद्रक्तधाराविछुरिताननां ॥
घोराकारां महारौद्रीं श्मशानालयवासिनीम् ।
भूत प्रेत पिशाचादिडाकिनीगणमध्यगाम् ॥
दैत्यदानवकोटिघ्नीं ललज्जिह्वाभयानकां ।
दक्षिणां कालिकां ध्यायेदित्थं सिद्धिविधायिनीं ॥
अथातश्छिन्नमस्तायाः मन्त्रन्ते व्याहराम्यहं ।
जिघृक्षयापि यस्यास्युः साधकस्याष्टसिद्धयः ॥
नातः परतरा काचिदुग्रा देवी भविष्यति ।
तस्मादशक्तैर्म्मनुजैर्न्न ग्राह्योयं कथञ्चन ॥
सिद्धिर्व्वा मृत्युरपि वा द्वयोरेकतरं भवेत् ।
प्रणवञ्च रमाबीजं लज्जां वाग्भवमेव च ॥
वज्रवैरोचनीये च इत्येवं तत उद्धरेत् ।
क्रोधद्वयं ततश्चास्त्रं स्वाहान्तः षोडशाक्षरः ॥
ध्यानं चास्याः प्रवक्ष्यामि तत्र चेतो निवेशय ।
स्वनाभौ नीरजं ध्यायेच्छुद्धं विकसितं सितं ॥
तत्पद्मकोषमध्येतु मण्डलं चण्डरोचिषः ।
जवाकुसुमसंकाशं रक्तवन्धूकसन्निभम् ॥

रजःसत्वतमोरेखायोनिमण्डलसन्निभं ।
मध्ये तस्या महादेवीं सूर्यकोटिसमप्रभां ॥
छिन्नमस्तां करे वामे धारयन्तीं स्वमस्तकं ।
प्रसारितमुखं भीमं लेलिहानोग्रजिह्वकं ॥
प्रपिबद्रौधिरीं धारां निजकण्ठसमुद्भवां ।
विकीर्णकेशपाशाञ्च नानापुष्पविराजितां ॥
दिगम्वरां महारूपां प्रत्यालीढपदस्थितां ।
अस्थिमालाधरां देवीन्नागयज्ञोपवीतिनीं ॥
विपरीतरतासक्तरतिका[५१ क]मोपरिस्थितां ।
वर्णिनीडाकिनीयुक्तां वामदक्षिणपार्श्वतः ॥
दक्षिणे वर्णिनीं ध्यायेद्वामपार्श्वे च डाकिनीं ।
वर्णिनीं लोहितश्यामां मुक्तकेशीं दिगम्वरां ॥
कपालकर्त्तृकाहस्तां वामदक्षिणयोगतः ।
देवीकण्ठोच्छलद्रक्तधारापानं प्रकुर्व्वतीम् ॥
अस्थिमालाधरां देवीं नागयज्ञोपवीतिनीम् ।
डाकिनीं वामपार्श्वे च कल्पान्तजलदोपमां ॥
विद्युच्छटाभनयनां दन्तपङ्क्तिवलाकिनीं ।
दंष्ट्राकरालवदनां पीनोत्तुंगकुचद्वयां ॥
महोदरीं मुक्तकेशीं महाघोरां दिगम्बरां ।
लेलिहानचलज्जिह्वां मुण्डमालाविभूषिताम् ॥
कपालकर्त्तृकाहस्तां वामदक्षिणयोगतः ।
देवीगलोच्छलद्रक्तधारापानं प्रकुर्व्वतीं ॥
करस्थितकपालेन भीषणेनातिभीषणां ।
दुर्निरीक्ष्यां चेतसापि सर्वकामफलप्रदाम् ॥

ध्यात्वेत्थम्मनुनानेन न्यसेत्साधकसत्तमः ।
अथत्रिकण्टकीमंत्रं समाकर्णयभामिनि ॥
क्रोधमादौ समुद्धृत्यमाङ्कुरौ चण्डघण्टिकौ ।
सविसर्गक्षवीजं च तृतीयं परिकीर्त्तितं ॥
अथ ध्यानं शृणु त्वम्मे यथावद्वरवर्णिनि ।
पादादानाभिपर्यन्तं घनाघनतनुच्छविः ॥
नाभेशनापिर्य्यन्तं सिन्दूरारुणविग्रहा ।
चतुर्भिर्वदनैर्य्युक्ता दंष्ट्रापटलभीषणैः ॥
दुर्न्निरीक्ष्यैर्महाघोरैः पलितंव्दरोपरि ।
त्रिनेत्राचन्द्रशकलद्योतिभालस्थला शिवा ॥
हस्ताभ्यां दधतीं शंखं चक्रमद्भुतविक्रमं ।
सर्व्वालंकारशोभाढ्यास [५१ ख] र्व्वं कामफलप्रदा ॥
ध्येयात्रिकण्टकीदेवी न्यासकर्म्मणिसाधकैः ।
अतोनीलपताकाख्यां विद्यामाकर्णयाम्बिके ॥
तारं हृत्पदमाभाष्य कामेश्वरि पदं ततः ।
कामाङ्कुशे पदं चोक्त्वा ततः कामप्रदायिके ॥
भगवत्यथ नीलान्ते पताके च भगान्तिके ।
रतिहृन्मंत्रमालिख्य ततोस्त्विति च ते वदेत् ॥
परमान्ते तथा गुह्येहूंकारत्रिकमालिखेत् ।
मदनेमदनान्तेथ देहे त्रैलोक्यमावदेत् ॥
आवेशय तथा लेख्यं कवचास्त्राग्निवल्लभा ।
षट्षष्ठ्यर्णा महेशानी देवी नीलपताकिका ॥
निगद्यमानं ध्यानं च समाकर्णय पार्व्वति ।
इन्द्रनीलशिलाखण्डसमानतनुरोचिषं ॥

प्रफुल्लपुण्डरीकाभवदनां स्मितशालिनीं ।
कवरीबन्धशोभाढ्यां पीवरोरोजसंयुतां ।।
रम्याभिः सर्व्वतो नीलपताकाभिरलंकृतां ।
वराभय कर द्वन्द्वं धारयन्तीं शुचिस्मितां ।।
ध्यायेदनन्यमनाः स्वस्थः साधकोविजितेन्द्रियः ।
द्वात्रिंशत्तमिकां देवीञ्चण्डघण्टामथो शृणु ।।
युद्धे जयेप्सुभिर्ह्र्ल्पैः पूर्वमाराधितापरा ।
द्विकाली च चतुः क्रोधमङ्कुशत्रितयं ततः ।।
द्विरमा च द्विमायाच्च योगिनीशाकिनीवधूः ।
चण्डघण्टे ततो वाच्यं शत्रूंश्च तदनन्तरम् ।।
स्तंभयद्वितयं प्रोच्य मारयद्वितयं ततः ।
कवचास्त्राग्निजायान्तो अष्टत्रिंशाक्षरोमनुः ।।
ध्यायेद्दूर्व्वादलश्यामां पूर्णचन्द्राननत्रयाम् ।
एकैकवक्त्रनयन त्रितयोज्वलविग्रहां ।।
पीताम्बरपरीधानां पीतस्रगनुलेपनां ।
सर्व्वाभरणनद्धाङ्गां रत्नाकल्प परि [५२ क] ष्कृतां ।।
चण्डघण्टामष्टभुजां स्थितां मत्तगजोपरि ।
खड्गं त्रिशूलंविशिखं कर्त्तृकां दक्षिणे करे ।।
चर्म्मपाशधनुर्द्दण्डखर्पराणि च वामतः ।
धारयन्तीं क्रूरदृष्टिं चण्डघण्टां विचिन्तये ।।
अतश्चण्डेश्वरीमंत्रं शृणुसावहितासती ।
तारलज्जारमाक्रोधां कुशकालीवधूस्मराः ।।
अष्टबीजं समुद्धृत्य शांभवं कूटमुद्धरेत् ।
ततश्चभैरवीकूटं कूटं माहेश्वरं ततः ।।

ततः परापरं कूटं व्योमकूटं च पंचमं ।
उक्त्वाचण्डेश्वरि ततः खेचरींयोगिनीं लिखेत् ॥
शाकिनीं गारुडं बीजं युगं क्रोधास्त्रयोस्ततः ।
वह्निजायान्वितोमंत्रो जगतीतलदुर्ल्लभः ॥
नातः परतरोमंत्रो न भूतो न भविष्यति ।
शृणु ध्यानममुष्यास्त्वं मतिनिर्मलचेतसा ॥
इन्द्रगोपनिभां देवीं प्रौढास्त्रीरूपधारिणीं ।
पञ्चवक्त्रां महाभीमां दंष्ट्राभिर्व्विकरालिनीं ॥
प्रविलस्तजटाभारां नरास्थिकृतभूषणां ।
केयूरांगदकोटीश हारनूपुरशालिनीं ॥
किंकिणीकुण्डलापीडधारिणीमस्थिनिर्म्मितां ।
रांकवत्वक्परीधानां शुष्कलंबस्तनद्वयां ॥
शवद्वयोपरिगतां दक्षवामांघ्रियोगतः ।
सकेशनरमुण्डाभ्यां बद्धाभ्यां पादयोर्द्वयोः ॥
त्रित्रिलोचनसंयुक्तवदनांघोररूपिणीं ।
चण्डेश्वरीं दशभुजामट्टहासं वितन्वतीम् ॥
वक्त्रं मुखद्वयं वामे दक्षिणे वदनद्वयं ।
संमुखे वदनं चैकं धारयन्तीं प्रकल्पितं ॥
हस्तमात्रविनिष्क्रान्त लेलिहान भयानकं ।
जिह्वायुगं दक्षिणयोःक [३२ ख] रयोर्व्विभ्रतीं सदा ॥
तथैव रसनायुग्मं दधती वामहस्तयोः ।
संमुखास्यगतांजिह्वां नभः स्थलप्रसारितां ॥
दधतीं घोरनादाट्टहासत्रस्तजगत्त्रयां ।
सद्यः कृत्स्नस्रवद्रक्तधारं मुण्डंकचान्वितम् ॥

कराभ्यां वामदक्षाभ्यां वहन्तीं सकलोपरि ।
ततो हस्तद्वये जिह्वां विस्फुरन्तीञ्च विभ्रतीम् ॥
मुण्डक्तासृजांधारां पतन्तीं रसनोपरि ।
पिबन्तीं शीत्कृतिं कृत्वा हूं हुंकारविनादिनीं ॥
तथा नृमुण्डयुगलं पुनर्दक्षिणवामयोः ।
पुनर्ज्जिह्वयुगंतद्वद्वामदक्षिणहस्तयोः ॥
धयन्तीं पूर्व्ववद्रक्तं सशब्द परिघोरितं ।
पुरः स्थिताभ्यां घोराभ्यां करालाभ्यामतीव हि ॥
योगिनीडाकिनीभ्यां च रक्तपूर्णघटद्वयं ।
सर्व्वदा पातयन्तीभ्यां स्थिताभ्यां पुरतः सदा ॥
संमुखस्थितजिह्वायां मांसखण्डास्थिपूरितं ।
पिबन्तीमीदृशाकारां दुर्निरीक्ष्यां सुरासरैः ॥
कपालं खर्प्परं शेष भुजाभ्यां बिभ्रतीं परां ।
चिन्तयेन्मन्त्रविन्यासे देवीं चण्डेश्वरीं हृदि ॥
इदानीं भद्रकाल्यास्त्वं शृणु मंत्रमनुत्तमम् ।
येन सिद्धिमवाप्नोति परत्रामुत्र मानवः ॥
प्रणवं शाकिनीबीजं वधूं कवचमेव च ।
योगिनीमंकुशं पाशं फेत्कारीस्मरमायिकं ॥
नवाक्षरो महामन्त्रो भद्रकाल्याः प्रकीर्त्त्यते ।
ध्यानं चास्याः कथ्यमानमवधारय पार्व्वति ॥
सिंहोपरि समासीनां मसीपुंजसमप्रभां ।
भ्रुकुट्यरालवदनां वीक्षणां घोरदर्शनां ॥
शार्दूलत्वक्परीधानां विष्वगंव [५३ क] स्तारितानना ।
अत्यन्तशुष्कसर्व्वाङ्गी ललज्जिह्वाकरालिनीं ॥

श्वेता गर्भस्थितत्र्यग्निसमाननयनां शिवां ।
नरमुण्डावलीहारां नादापूरितपुष्करां ॥
ज्वलद्धुतवहाकारविस्रस्तकचसंचयां ।
नरास्थिकृतसर्वांगभूषणां जगदंबिकां ॥
कोटि कोटिमहाघोरयोगिनीगणमध्यगाम् ।
कालीं दशभुजां सृक्कगलद्रुधिरचर्च्चिताम् ॥
खड्गं त्रिशूलं विशिखं शक्ति दक्षिणतः स्मरेत् ।
फलकं डमरुं चापं कपालंवामतोपि च ॥
व्यादाय वदनं घोरं दंष्ट्राभिः पूरितान्तरं ।
लेलिहानचलद्विद्युत्समानरसनं महत् ॥
दानवासुरदैत्यानां कोटिमर्बुदमेव च ।
धारयित्वा च धृत्वा च सार्द्धं कटकटारवैः ॥
प्रक्षिप्य तत्रबाहुभ्यां चर्वयन्तीं हसन्मुखीं ।
गिलन्तीं पूरयन्तीञ्च पातालतुलितोदराम् ॥
ध्यात्वा चैवंविधां कालीं ततोङ्गेषु न्यसेदमुं ।
गुह्यकालीमंत्रमतो समाकर्णय भामिनि ॥
यत्तवैवोच्यते देवि नैवान्यत्र कदाचन ।
त्रपानंगंशाकिनीञ्च क्रोधमंकुशमेव च ॥
गुह्यशब्दादपि वदेत्कालिशब्दं वरानने ।
कालीं च योगिनीवीजं फेत्कारीं चण्डमेव च ॥
योगिनीकामिनीवीजं स्वाहान्तेविनिवेशयेत् ।
सुदुर्ल्लभो मंत्रराजो ज्ञेयः सप्तदशाक्षरः ॥
न तीर्य्यतेस्यमहिमा वर्णितुं वरवर्णिनि ।
ध्यानंनिशामयाथास्याः प्रोच्यमानं मया स्वयं ॥

आपादपद्मादारभ्याकण्ठं पाटलसन्निभा ।
मुखे दूर्व्वादलश्यामा जटाभारविराजिता ॥
शवोपरिसमासीना किञ्चिद्विस्ता [५३ क] रितानना ।
दशभिर्व्वदनैर्युक्ता त्रित्रिचक्षुर्व्विराजितैः ॥
मुण्डकुण्डलसंवीता सर्व्वेष्ववदनेष्वपि ।
नरास्थिविहिताकल्पा कल्पकल्पक्षयंकरा ॥
सर्वत्रलंवितजटा सर्वत्रापदितारिणी ।
किंचिच्छुष्कगलोद्देशा किंचिदाकुंचितानना ॥
पिचिण्डिला निम्ननाभिर्नातिपीनपयोधरा ।
स्थूलोरुजंघा विकटा सर्वाभरणभूषिता ॥
अदीर्घषोडशापीनदोर्म्मण्डलविराजिता ।
नीलांवरपरीधाना नीलस्त्रग्गंधलेपना ॥
शिवापोतञ्च खट्वांगं गदामंकुशमेव च ।
घण्टां नृमुण्डं वामेन दधती खर्पराभये ॥
खड्गं त्रिशूलं चक्रञ्च नागपाशं ततः परं ।
जपमालां च डमरुं कर्त्तृकां वरमेव च ॥
धारयन्ती दक्षिणेनोपविष्टा कुणपोपरि ।
योगपट्टसमुन्नद्धजानुमध्यकरांबुजा ॥
समस्तविग्रहव्यापि मुण्डमालाविराजिता ।
सर्व्वकामप्रदादेवी सर्व्वसिद्धिविधायिनी ॥
ध्यातव्याभक्तिभावेन परमैश्वर्यदायिनी ।
नातष्परतरा कापि त्रैलोक्यैश्वर्य्यसाधिका ॥
विद्यते दयिते देवि सद्यः प्रत्ययकारिणी ।
लोकपालशिरोरत्ननिघृष्टचरणद्वयः ॥

त्रैलोक्यविजयी यत्र प्रमाणं दशकंधरः ।
दिव्यं वर्षायुतं देवि ध्याथता येन तां परां ॥
पेशष्कारीयता कालात्प्राप्ता सत्यं दशास्यता ।
यमेन्दुचन्द्रवरुणकुवेरानिलनैर्ऋताः ॥
मित्राग्निरविनासत्यरुद्रब्रह्मादिदेवताः ।
यक्षराक्षसगंधर्व्वसिद्धविद्याधरोरगाः ॥
उपासते सभायां यां नित्यमेव समाहिताः ।
मन्वन्तरद्वयं पूर्णं किञ्चिदप्यधिकं [५४ क] प्रिये ॥
यः शशासाखण्डिताज्ञो भुवनानिचतुर्दश ।
नास्तेऽमरत्वमेतस्मात्कालेनासौ निपातितः ॥
अथातोनंगमालाया व्याहरामि मनुं शुभं ।
प्रणवं वाग्भवं पाशं त्रपापाशांकुशान्यपि ॥
क्षेत्रपालं च कालीञ्च गारुडं शाकिनीमपि ।
अनंगमाले उल्लिख्य स्त्रियमित्युच्चरेदथ ॥
आकर्षयद्वयं चोक्त्वा त्रुटछेदययोर्युगं ।
कवचद्वितयंचास्त्रद्वयं स्वाहान्तगो मनुः ॥
स्वर्णसिंहासनगतां तप्तकांचनसन्निभां ।
विशालमुकुराकारवदनां स्मितशालिनीं ॥
चलत्खंजनलीलानुकारित्रिनयनां सदा ।
अर्द्धेन्दुशेखरां देवीं किञ्चिदाकुंचितभ्रुवं ॥
कर्णान्दोलस्फुरद्रत्नकुण्डलोद्यत्कपोलकाम् ।
पीवरोत्तुंगवक्षोजां वक्षोजोद्योतिगोस्तनां ॥
गोस्तनोद्योतिशशभृच्छेखरांजगदंबिकां ।
बृहन्नितंबवेदीकां तनुमध्यां वरोरुकां ॥

मञ्जीरकिङ्किणीहारकङ्कणाङ्गदराजितां ।
वराभयकरां देवीं द्विभुजां सिद्धिदायिनीं ॥
ध्यात्वा चित्ते न्यसेद्देवीं सर्व्वकामार्थसिद्धये ।
कथयाम्यथचामुण्डामन्त्रमुन्नतिकारकं ॥
यज्ज्ञात्वा यत्रकुत्रापि संकटे नावसीदति ।
संयुगेनिर्भयो भूपादधिगच्छेच्च संपदं ॥
प्रणवाङ्कुशकालीयशाकिनीचण्डयोगिनीः ।
खेचरीक्रोधफेत्कारीविद्युत्कालरतित्रपाः ॥
भौजंगममहाक्रोधमीपर्णान्षोडशोच्चरेत् ।
चामुण्डे इतिसंकीर्त्य युग्मज्वलहिलेः किलेः ॥
ममशत्रूनिति प्रोच्य युगं त्रासय मारय ।
हन युग्मं पदं युग्मं भक्षयद्वितयं ततः ॥
काली त्रपारु [५४ ख] षां युग्मं फट् द्वयंस्वाहया युतं ।
एकसप्तत्यक्षरोमौ मंत्रः परमशोभनः ॥
धरालग्नशिरोजानु प्रसुप्तकुणपोपरि ।
निषेदुषीं निः पललसर्व्वावयवभीषणां ॥
त्वगस्थिमात्रघटितामत्युग्राकारदर्शनां ।
कपालाकारशिरसं विलुंठितशिरोरुहां ॥
स्कंधावसक्तयुगलकुण्डलीकृतखर्परां ।
नार्यास्थिनिर्म्मितानेकभूषणांभीषणाकृतिं ॥
मुण्डमालापरिक्षिप्तां ललज्जिह्वाभयानकां ।
विकरालमहादंष्ट्रां रौद्रीं रुद्रपरिग्रहां ॥
अतिशुष्कोदरश्रोणि नितंबोरुपयोधरां ।
गणेशोभय पार्श्वस्थपञ्जरास्थिकरालिनीं ॥

दीर्घतालद्रुमाकारकरपादां हसन्मुखीं ।
खर्ज्जूरकंटकाकाररोमराजिविराजितां ॥
लोहसूर्पाकृतिनखां समुत्कल्पिशिरोधरां ।
कूपाकारत्रिनयनां विद्युच्चपलतारकां ॥
लम्बमानौष्ठाधरां तां वलीलग्नपयोधरां ।
विदीर्णसृक्कयुगलां नारांत्रकटिसूत्रिणीं ॥
दिगंबरां चर्व्वयन्तीं शवं कहकहारवैः ।
अष्टादशभुजां भीमां चरन्तीं पितृकानने ॥
वामेकरे चर्म्मचापखट्वांगडमरूक्रमात् ।
अंकुशं च तथा पाशं भिंदिपालं शवं तथा ॥
रक्तपूर्णकपालं च धारयन्तीं महोदरीं ।
दक्षिणेबिभ्रतीं खड्गं विशिखं च त्रिशूलकं ॥
चक्रं शक्ति गदां पर्शुमस्थिमालां च कर्त्तृकां ।
दिवाकालाभ्रसदृशां जवापुष्पारुणां निशि ॥
बलाकासमदन्तालीं भुजङ्गाकुटिलभ्रुवं ।
अति क्रूराकृतिधरां दृष्ट्वैव मरणप्रदां ॥
घोराट्टहासां गगने प्लवन्तीं सर्व्वतोमुखीं ।
चिन्तयित्वा तु चामुण्डा [१५ क] मित्थमङ्गे न्यसेन्मनुं ॥
धरित्रीधरणेधीरामाकर्णय इतःपरं ।
तारं नमः समाभाष्य भगवत्यै ततो वदेत् ॥
वराह इतिचोद्धृत्य रूपिण्यै तदनन्तरं ।
ततश्चतुर्द्दशप्रोच्य कीर्त्तयेद्भुवना ततः ॥
धियायै समनुद्धृत्य वाराह्यौ तदनन्तरं ।
भूपतित्वन्ततः प्रोच्य मे देहि तदनन्तरं ॥

दापयानन्तरंवह्निजायान्तो मनुरीरितः ।
घननीलघनाकारां खर्व्वंस्थूलकलेवरां ॥
हस्तमात्रविनिष्क्रान्त प्रचलत्पोत्र रंध्रवत् ।
वामभागेक्षिवदनं धारयन्तीन्त्रिलोचनां ॥
अष्टमीचन्द्रखण्डाभदंष्ट्रायुगविराजितां ।
कोपादालोलरसनां विस्तारिविकृताननां ॥
कल्पान्तरविसंकाशां पूरयन्ती जगत् त्विषा ।
भीमदंष्ट्राट्टहासां च रक्ताक्षीं रक्तवाससं ॥
कृपाणाकाररोमालीपरिपूर्णकलेवरां ।
भूदारूपधात्रीञ्च संचरन्तीं विहायसि ॥
सटाधूननवित्रस्तप्रपलायितखेचरां ।
सर्व्वालंकारसंयुक्तां घुर्घुरारावकारिणीं ॥
अब्जचापांकुशान्पाशं वामगे बिभ्रतीं करे ।
चक्रं बाणं गदां शंखं दधतीन्दक्षिणे करे ॥
दूर्व्वादलश्यामलया चरण्या सेवितां सदा ।
वाराहीं चिन्तयेदित्थं सर्व्वकामफलप्रदां ॥
शृण्वतो बगलामन्त्रं येनशंवदनं भवेत् ।
प्रणवान्ते नमोदत्वा भगवत्यैततोपि च ॥
पीतांबरायै चोद्धृत्य त्रपायुग्मं ततः परं ।
ततश्चसुमुखि प्रोच्य बगलेतदनन्तरम् ॥
विश्वमेतीवशं प्रोच्य कुरुयुग्मं शिरोपि च ।
एकत्रिंशाक्षरोमंत्रो जगद्वश्यकरः प्रिये ॥
नि[५५ ख]गद्यमानमस्यास्त्वं ध्यानमप्यवधारय ।
गौरीपीतांबरधरा पीतस्रगनुलेपना ॥

रत्नसिंहासनगता रत्नालंकारभूषिता ।
त्रिनेत्रा चन्द्रशकलविराजितललाटिका ॥
सौन्दर्य्यसारविजितजगल्लावण्यपुंजिका ।
चतुर्भुजांकुशवरे दक्षिणेबिभ्रती करे ॥
तथैव धारयन्ती च वामेदीपाभये करे ।
ध्यातव्याभक्तिभावेनवश्यकर्म्म चिकीर्षता ॥
अथातो जयदुर्गाया रम्यं मनुमुदीरये ।
ताराङ्कुशस्मररमामायापाशवधूरुष: ॥
जय दुर्गेततश्चोक्त्वा रक्षरक्षततोवदेत् ।
स्वाहान्तएषकथितो मनुरष्टादशाक्षरः ॥
यथैतां चिन्तयेद्देवीं तथा त्वमवधारय ।
अतिकालघनाकारा चन्द्रार्द्धकृतशेखरा ॥
कटाक्षैः शत्रुसंघातान्निर्द्दहन्ती परात्परा ।
त्रिनेत्रा भृकुटीभङ्गा वित्रासितजगत्त्रया ॥
सिंहघोरणधौरीणा चलच्चिकुरपल्लवा ।
अष्टबाहा जगद्धात्री विकरालतरानना ॥
शङ्खं तथाङ्कुशं चापं जीवतोबैरिणः शिरः ।
सकच्चंवामपार्श्वस्थकरेण दधती शिवा ॥
करवालं तथा चक्रं विशिखं च गदामपि ।
दक्षिणेनकरेणैव धारयन्ती भयप्रदा ॥
जयदुर्गा सदाध्येया घोरे समरमूर्द्धनि ।
धारय त्वं कथ्यमानं नारसिंहीमनुं मया ॥
तारपाशांकुशक्रोधकालमायास्मरस्त्रियः ।
महाक्रोधक्षेत्रपालचण्डताकालशाकिनीः ॥

उक्त्वा जिह्वासटाशब्द घोररूप ततो वदेत् ।
दंष्ट्राकराले आभाष्यनारसिंहि समुद्धरेत् ॥
प्रासादत्रितयं चोक्त्वा हूंकारत्रिकमालिखेत् ।
अस्त्रद्वयं ततः [४६ क] स्वाहाचत्वारिंशाक्षरो मनुः ॥
यादृशा ध्यानचर्च्चा स्यात्तामप्याकर्णय प्रिये ।
हिमानीकुन्द कैलासरजताचलसन्निभा ॥
विस्रस्तकेशरमणा विकीर्णवदनाकृतिः ।
सृक्कक्षरद्रक्तधारा लंबमानावरागलं ॥
द्विगुणीकृतशीतांशुकलातुल्यरदावलिः ।
अवभ्रटाक्षीणमध्या—लातसंकाशदृग्द्वया ॥
कृशदीर्घसमस्ताङ्गी सर्व्वालंकारमण्डिता ।
प्रोद्यन्मार्त्तण्डविवाभकौस्तुभोद्भासिनी हृदि ॥
मुखावटविनिर्गच्छज्जिह्वाकोटिशतह्रदा ।
केशराधूननत्रस्त खचराखचरस्यदा ॥
वज्राधिकनखस्पर्शा लोचनाभ्यां मुखादपि ।
वमन्ती कल्पकालाग्नि चर्व्वयन्तीदितेः सुतान् ॥
हसन्ती चाट्टहासेन नृत्यन्ती व्योममण्डले ।
गच्छन्तीवातवेगेन चरन्ती पितृकानने ।
दैत्यवक्षःपातनोत्थरुधिरोक्षितविग्रहा ।
सुदीर्घषोडशभुजाशीतिदंभोलिधारिणी ॥
चाप कंव्वब्जचर्म्माणि मुशलं परशुन्तथा ।
धारयन्ती करे वामे पट्टिशं च विदारणम् ॥
बाणचक्रगदाखड्गपाशांकुशपरीनपि ।
विदारणन्दक्षिणेन करेण दधती तथा ॥

प्रतप्तहेमपिङ्गाग्रसटाभारावगुंठिता ।
प्रकम्पिततनूयष्टिः पारिप्लवकनीनिका ॥
प्रसुप्तभुजगाकारलूमखण्डविराजिता ।
नक्षत्रमालापि तया रम्या नक्षत्रमालया ॥
संवर्त्तकालकोट्यर्कदुर्निरीक्ष्यभयंकरा ।
कोटिप्रलयकालाग्निप्रत्यनीकतनुप्रभा ॥
इत्थं ध्येया नारसिंही न्यासकर्म्मणि पार्व्वति ।
ब्रह्माणीमंत्र [५६ ख] मधुना संदिशामि तवेश्वरि ॥
प्रणवादि लिखेत् पाशं प्रासादं तदनंतरं ।
पीयूषमंकुशं नागमस्त्रं सप्ताक्षरो मनुः ॥
ध्येयेयं येन विधिना वदामि तदपि प्रिये ।
हंसासनसमारूढ़ा रक्तवर्णचतुर्म्मुखा ॥
पिचिण्डिला निम्ननाभिः शुक्रयज्ञोपवीतिनी ।
स्थूलगंडाधरौष्ठभ्रू कपोलवदनासिका ॥
बद्धपद्मासना स्थूला घर्मपिंगशिखाजटा ।
सप्तभिर्न्नारदाद्यैः स्तूयमाना परेश्वरो ॥
बाहुभ्यां दक्षवामाभ्यामक्षसूत्रं कमण्डलुं ।
धारयन्ती मुखैर्व्वेदान्पठन्ती खर्व्वविग्रहा ॥
चिन्तनीयेदृशी देवी ब्रह्माणी सर्व्वकामदा ।
वदामि वैष्णवीमंत्रमाकर्णय वरानने ॥
तारं नमः समुद्धृत्य नारायण्यै ततो वदेत् ।
जगत्स्थिति ततश्चोक्त्वा कारिण्यै तदनंतरं ॥
कामबीजत्रयं चोक्त्वा लक्ष्मीबीजत्रयं ततः ।
पाशबीजं कालबीजं ततश्च विनिवेशयेत् ॥

स्वाहान्तो मनुरुद्दिष्टश्चतुर्विंशाक्षरात्मकः ।
इन्द्रनीलमणिश्यामां फुल्लराजीवलोचनां ॥
कोटिशारदपूर्णेन्दुसमानमुखरोचिषं ।
अत्यच्छदर्प्पणीभूतकपोलद्वयराजितां ॥
शोणबिंवाधरां रत्नस्फुरन्मकरकुण्डलां ।
कंबुग्रीवां महोदारां तुंगवक्षोजनम्रितां ॥
श्रीवत्सकौस्तुभोद्भासिवक्षःस्थलविराजितां ।
शंखचक्रगदापद्मधारिभिर्दीर्घपीवरैः ॥
चतुर्भिः पल्लवाकारैर्बाहुभिः परिराजिता ।
आपादपद्मलंबिन्यालंकृतां वनमालया ॥
किरीटरत्नकेयूरमंज्जीरादिभिरुज्ज्वला ।
पीताम्बरधरां देवीं भक्तानामभयप्रदां ॥
गरुडासनमारूढां म[४७ क]न्दमंदस्मिताधरां ।
पक्षाभ्यां दीर्घपीनाभ्यां पृथुचंच्वावृताननां ॥
हेमाभं गरुडं ध्यायेद्यमारूढा हि वैष्णवी ।
अथ माहेश्वरीमंत्रं समासात्प्रब्रवीमि ते ॥
यस्यैकवारस्मरणान्निर्वाणमपि लभ्यते ।
तारप्रासादपीयूषपाशलज्जारमारुषः ॥
माहेश्वरीपदं देवि प्रोच्चरेत्तदनन्तरं ।
शांकरं शांभवं व्योम कूटत्रयमुदाहरेत् ॥
भुजंगमतडिन्मेघशाकिनीरतिकालिकाः ।
चण्डकालामृतप्रेतान्युगलं कवचास्त्रयोः ॥
त्रिंशद्वर्णात्मको मंत्रः स्वाहासंवलितो भवेत् ।
इदानीं व्याहराम्यस्या ध्यानं सत्वगुणोज्वलं ॥

हिमानी शैल संकाशामतिपीतजटाभरां ।
घनाघनाभनागेन्द्रपरिवद्धजटात्रयां ॥
जटाजूटोच्छलद्गंगाजलकल्लोलमालितां ।
पंचवक्त्रां गलच्छायाजितकज्जलरोचिषं ॥
हिमांशुशकलोद्दीप्तपञ्चभालां हसन्मुखीं ।
प्रतिभालप्रविद्योतित्रित्रिलोचनसंगताम् ॥
भालतृतीयनेत्रोद्यद्वह्निज्वालासमाकुलां ।
कपोलमण्डलोद्योति शुद्धस्फटिककुण्डलां ॥
शुभ्रवासुकिनागेन्द्रुलसद्यज्ञोपवीतिनीं ।
शातकुंभाभनागेन्दुरुचिराङ्गदशोभितां ॥
अतिशोणभुजङ्गेन्दुविलसद्रत्नकङ्कणां ।
वसानां चर्म्म वैयाघ्रं रत्नाकल्पोल्लसत्तनुं ॥
माहेश्वरीं समारूढामतिश्वेतवृषोपरि ।
दशबाहां वीरभद्रनन्दिभृंगिपुरःसरां ॥
विष्णुरूपं शरं घोरं त्रिशूलं पर्शुमेव च ।
अक्षमालां दक्षकरे संविभ्रतीं परां ॥
पिनाकं नागपाशञ्च मृगं डमरुमेव च ।
अभयं दधतीं वामे प्रमथा [१० ख] दिगणैर्वृतां ॥
इत्थं विचिन्त्य मनसा न्यसेदंगेषु साधकः ।
अथेन्द्राणीमनुं वक्ष्ये मातृमण्डलमध्यगं ॥
यदाराधनतो लोकः सद्यः प्राप्नोति देवताम् ।
प्रणवं समनुद्धृत्य वदेल्लज्जारमास्वः ॥
इन्द्राणि तदनूद्धृत्य मायायुग्मं ततोवदेत् ।
हुं हुं ततः समुच्चार्य्यं क्षेत्रपालद्वयं ततः ॥

अस्त्रत्रयान्ते संयुक्तः शिरोमंत्रेण पार्व्वति ।
अष्टादशाक्षरो मंत्रः सर्व्वसिद्धिप्रदायकः ॥
ध्यानं निरुच्यमानं त्वं समाकर्णय पार्व्वति ।
कैलासाचलसंकाशतुंगैरावतसंस्थिता ॥
नीलोत्पलदलश्यामा कवचावृतविग्रहा ।
रक्तांवरपरीधाना पीवरा खर्व्वविग्रहा ॥
अनर्घ्यरत्नघटितचलच्छ्रवणकुण्डला ।
सर्व्वाङ्गव्याप्तशोणाब्जसहस्रनयनोज्वला ॥
चतुर्भुजा महापीनोत्तुंगवक्षोजमण्डिता ।
वाहुभ्यां दक्षवामाभ्यां स्थिताभ्यामुपरि क्रमात् ॥
कुलिशं खेटकं चापि विभ्रती समरोत्सुका ।
वामेनास्फालयन्ती च गण्डं करिपतेर्म्महत् ॥
दक्षेण बाहुना कुंभं दधती ददती शृणिं ।
चतुर्द्दन्तो मदोन्मत्तस्तुषाराचलसन्निभः ॥
ऐरावतोऽपि ध्यातव्यो यमिन्द्राणी समाश्रिता ।
अथातो हरसिद्धाया मंत्रं ते व्याहराम्यहं ॥
सर्व्वं मयाराधितेयं वहुसिद्धिमभीप्सता ।
अतः प्रसिद्धिं संप्राप्ता मन्त्राम्नैव (मन्त्रेणैव?) वरानने ॥
प्रणवं वाग्भवं वीजं मायावीजं ततः परं ।
कमलां मान्मथं वीजं कालीपाशाङ्कुशा अपि ॥
चण्डक्रोधमहाक्रोधफेत्कारी शाकिनो अपि ।
हरसिद्धि ततः प्रोच्य सर्व्वसिद्धिमितीरयेत् ॥
करुयुग्मं देहि युगं दापयद्वितयं [५८ क] पुनः ।
क्रोधत्रयं समुद्धृत्य द्विफडन्तोऽग्निवल्लभा ॥

द्विचत्वारिंशवर्णाद्यो मंत्रः सर्वोत्तमोत्तमः ।
ध्यानं चास्याः प्रवक्ष्यामि यत्कृत्वा न्यासमाचरेत् ॥
हरितालसमाभासलोचनत्रयभूषितां ।
पादालंबिजटाभारां नरमुण्डकृतस्रजं ॥
बर्हिपिच्छकृतोदग्रकांचीकिङ्किणिमण्डितां ।
शार्दूलचर्म्मारचितकंचुकयावृतवक्षसं ॥
शवोपरि समारूढ़ामीषत्कंपितमस्तकां ।
चलदोष्ठपुटां बाहुचतुष्केन विराजितां ॥
बर्हिणं वृक्षपालं च नामतो बिभ्रतीं शुभां ।
खड्गं च कर्त्तृकां दक्षे योगपट्टकृतस्रजं ॥
अथ फेत्कारिणीमन्त्रं व्याहरामि तव प्रिये ।
सद्यः कविर्यद्ग्रहणाद्राजा वापि प्रजायते ॥
प्रणवाङ्कुशसौपर्णफेत्कारीक्रोधयोगिनीः ।
बीजान्युद्धृत्य फेत्कारिपदं प्रोक्त्वा वदेत्ततः ॥
दद युग्मं देहि ततो दापयेति पदं वदेत् ।
स्वाहान्तोमनुराजोयं त्रिंशत्यक्षरिकः प्रिये ॥
ध्यानमस्या ब्रुवे नाभेरधो मनुजसंनिभां ।
ऊर्द्धंगोमायुसदृशीं तदाकारां मुखेपि च ॥
अधोजांबूनदरुचिमूर्द्धं रक्तासितप्रभां ।
पृष्ठे लूमयुतां नग्नां कुर्व्वन्तीं फैरवंरवम् ॥
शिवाकारं बाहुयुगं बिभ्रतीं पितृतान्वितां ।
प्रसुप्तशवपृष्ठस्थां योगपट्टे निषेदुषीं ॥
शिवाभिर्घोररूपाभिर्वामदक्षिणतो वृतां ।
अथ ब्रवीमि लवणेश्वर्य्या मन्त्रं कलाणिकं ॥

आदौ चैतन्यकमले पाशप्रासादकौ ततः ।
रुग्भूतप्रेतडाकिन्यो योगिनी वनिता तथा ॥
मानसं वज्रभाण्डे कपालं च कुलाङ्गना ।
त्रैवर्णिकः सर्व्वशेषे महामंत्रोयमीरितः ॥
सांप्र [५८ ख] तं ध्यानमाख्यास्ये यत्कृत्वा न्यासमाचरेत् ।
रत्नसिंहासनारूढ़ां दूर्व्वादलसमद्युति ॥
बद्धांजलिपुटैः सप्तसागरैः रत्नपाणिभिः ।
विहायसं मुखं दिक्षु विदिक्षु परिवेष्टितां ॥
नेत्रदासक्तहस्तेन धनदेन पुरोजुषा ।
सेवितां प्रज्वलन्मौलिमणिभिर्न्नागनायकैः ॥
अष्टभिर्न्निधिभिश्चापि महापद्मादिभिर्वृतां ।
चतुर्भुजां रत्नकुंभाभये सव्यभुजद्वये ॥
अक्षमालावरे दक्षे भुजयुग्मेषु बिभ्रतीं ।
मुक्ताहारपरिक्षिप्तां द्रव्यसिद्धिविधायिनीं ॥
न्यासं समाचरेद्देवि ध्यात्वेत्थं लवणेश्वरीम् ।
अथातो नाकुलीम्वक्ष्ये महाविद्यां जयप्रदां ॥
सर्व्वादिप्रकृतेरादौ सप्तान्ते चतुरस्तथा ।
त्यक्त्वा माध्यमिकैर्भूतमितैर्मंत्रो महाफलः ॥
कपोतगलदेहाभा पीनोरोजा दिगंबरा ।
मुक्तपादालंबिजटाजूटभारा भयङ्करा ॥
बभ्रौ निषेदुषी सूच्याकारतुण्डी खरस्वरा ।
सितलूताजालजाला छादितोर्द्धशिरोरुहा ॥
कपालमालाभरणा ह्यस्थिकांचीगुणोज्ज्वला ।
लंबमानशिवापोतकुण्डलद्वयशोभिता ॥

अर्द्धचंद्रसमुद्भासिभ्रमरीकललाटिका ।
दण्डाकारितयोर्दक्षवामयोर्भुजयुग्मयोः ॥
बिभ्रती कालभुजगौ दीर्घदंष्ट्रा करालिनी ।
परस्परं त्यक्तवैरैरुरगैर्न्नकुलैरपि ॥
संवेष्टिता चतुर्दिक्षु महारण्यकृता मया ।
सांप्रतं मृत्युहारिण्या मंत्रध्याने ब्रवीमि ते ॥
मृत्युञ्जयप्राणमंत्र उद्धृताया नवाक्षरी ।
नास्या न्यासं तथा कुर्य्यादन्येन प्रब्रवीमि ते ॥
तारमाये रमाकाली रावान्ता चतुरक्षरी ।
प्रासादप्रेतभैरव्यः कूटं शांभवमे [४८ क] व च ॥
कूटं च परमात्मीयं विहायैतच्छुचिस्मिते ।
विलोमरीत्या प्रवदेत्तान्येव द्वादशानि हि ॥
पंचविंशाक्षरो मंत्रो मृत्योर्म्मृत्युकरः स्मृतः ।
आचरेदमुना न्यासमिदानीं ध्यानमीरये ॥
हिमानीकूटसदृशीमीश्वरीं देहरोचिषा ।
उत्तानकुणपाकारकालमृत्यूपरिस्थितां ॥
चतुर्वेदाकारयोगपट्टजानुद्वयाङ्किताम् ।
सितसूक्ष्मांबरधरां स्मेराननसरोरुहां ॥
ज्ञानरश्मिच्छटाटोपविद्योतिततनुमण्डलां ।
विभूषितां यावदेकयोपिद्भूषणसंचयैः ॥
विद्याभिरष्टादशभिर्न्निबद्धांजलिभिः सदा ।
सेव्यमानां चतुर्दिक्षु हसन्तीं तान्निरीक्ष्य च ॥
चतुर्भुजां सुधाकुंभपुस्तकं वामहस्तयोः ।
दक्षयोरक्षमालां च मुद्रां व्याख्यानशालिनीं ॥

दधतीं सर्व्वदा ध्यायेद्देवीन्तां मृत्युहारिणीं ।
एकपञ्चाशत्तमा वै कामकालिका ॥
न्यसनीया सर्व्वदोषे व्यापकत्वेन पार्व्वति ।
ध्यानं पूर्वोक्तमेवात्र कर्त्तव्यं प्रथमं बुधैः ॥
ततस्तत्वमिता मंत्रा न्यसनीया क्रमेण हि ।
सर्व्वाम्नायाः सप्तदश्याः प्रथमं समुदीरयेत् ॥
व्यापकं मातृकावर्णौ सहाम्नायनिकस्य च ।
जघन्ये हृन्मनुर्देवि मध्ये तु मनवोऽखिलाः ॥
एकैकेनैकवारं हि विदध्याय(स्व?)कं बुधः ।
पंचविंशतिभिश्चैवं मनुभिः पृथगीरितैः ॥
व्यापकं तावतो वारान्निरालस्यः समाचरेत् ।
अथवा निखिलान्मंत्रानुच्चार्य्य क्रमतः प्रिये ॥
नमोन्ते व्यापकं कुर्यात् पूर्व्वेऽस्मिन्फलभूयता ।
इतरत्र ततः किंचित्तारतम्यम्प्रचक्षते ॥
नरीप्युपासिताविद्या पुरः सप्तदशी मता ।
ततोनु कपि [५६ ख] लोपास्या षोडशार्णा निगद्यते ॥
नवाक्षरी हिरण्याक्षोपासिता तदनन्तरं ।
ततो दशार्णा विज्ञेया लवणोपासिता हि या ॥
वैवस्वतमनूपास्या ज्ञेया पञ्चदशी ततः ।
नवबीजात्मिका दत्तात्रेयोपास्या नवाक्षरी ॥
दूर्व्वासोदावितश्चापि ततः पंचाक्षरीमता ।
सप्तदशाक्षरं ज्ञेयं त्रैलोक्याकर्षणं ततः ॥
मन्वक्षरो मनुः पश्चादुत्तङ्कोपासितः प्रिये ।
ततोपरा सप्तदशी विश्वामित्रेण सेविता ॥

तत ऊनत्रिंशदर्णा विद्योर्व्वोपासिता स्मृता ।
पराशरोपासितश्च षष्ठांशकाक्षरस्ततः ॥
विद्यात्रिकूटा तदनु भगीरथनिषेविता ।
वैरोचनिसमाराध्या तदनु स्यात्षडक्षरी ॥
ख्याता महाषोडशीया संवर्त्तोपासिता ततः ।
नारदोपासिता पश्चाज्ज्ञेया पंचदशाक्षरी ॥
या वीजान्तरिता शांभवादिकूटपुरःसरा ।
सप्तकूटात्मिका पंचवीजेन घटिता तथा ॥
ख्याता महासप्तदशी गरुडोपासिता तथा ।
वक्ष्यमाणक्रमेणापि या च सप्तदशी ततः ॥
कामदग्धोपासिता च ततः सप्ताक्षरी मता ।
भृगूपास्यतया ख्यातस्तत एकादशाक्षरः ॥
चतुर्द्दशार्णास्तदनु कार्त्तवीर्य्येण सेविता ।
पंचाक्षरी पृथूपास्या तत्पश्चादनुकीर्त्यते ॥
द्वाविंशाक्षरिकः पश्चाद्धनूमत्समुपासितः ।
शताक्षरसहस्रार्णौ सर्व्वोपास्यौ ततत:(ततः?) परं ॥
चतुर्व्विंशमिता एवं मन्त्रव्यापककर्म्मणि ।
ध्यानञ्चैषामेकमेव यत्पूर्व्वं गदितन्तव ॥
प्राणायामन्ततः कृत्वा षडङ्गमपि चाचरेत् ।
शतमष्टोत्तरं जप्त्वा न्यासं देव्यै समर्प्पयेत् ॥
वक्ष्यमाणेन मन्त्रेण गृहीतकरपुष्करः ।
ॐ सर्वत्रि [६० क] विष्टं त्रैलोक्ये त्रैलोक्यं त्वयि विष्टितं ॥
त्वमप्यमुष्मिन्न्यासे स्वसंनिविष्टाणुरूपिणी ।
त्रैलोक्यविजयत्वेन ख्यातोयमतएव हि ॥

निविष्टोयं मयि न्यासस्त्रिपुरा विश्वरूपिणी ।
न्यासस्तवार्पितो देवि त्रैलोक्यविजयो मया ॥
एतेनैव सह त्वञ्च मय्येव प्रविशाम्बिके ।
त्रैलोक्यमखिलन्तस्मान्मद्रूपत्वे वितुष्टितं ॥
अहन्त्रैलोक्यरूपश्च तस्मादैक्यं बभूव त्वं ।
कृतं न्यासं समर्प्यैवं बलिं देव्यै निवेदयेत् ॥
स्वस्वानुक्रमतोमन्त्रपूर्व्वसंभक्तिभावितः ।
तारत्रपाकामवध्वः शाकिनी डाकिनी तथा ॥
फेत्कारीप्रेतभैरव्यः कूटं शाम्भवमेव च ।
एह्येहि भगवत्युक्त्वा कालि कामकलार्णकः ॥
इमं बलिं गह्णयुगं तावद् गृह्णापयेत्यपि ।
खादयद्वयमाभाष्य भक्षयद्वितयं ततः ॥
सर्व्वसिद्धिप्रयच्छेकं वमदग्निमुखीरयेत् ।
फेरुकोटि समाभाष्य ततः परिवृते वदेत् ॥
हस ज्वल प्रज्वल च द्वयं द्वयमुदीरयेत् ।
क्रोधास्त्रयोश्च त्रितयं नमः स्वाहा जप(प?)न्यतः ॥
यथेष्टं विहरेद्धीमान्पठित्वा(त्व?)मुना बलिं ।
संहारमुद्रया देवीं हृदये विनिधाय च ॥
इति कामकलाकाल्या षोढान्यासो मयेरितः ।
किंत्वस्य महिमा वक्तुं मयापि नहि शक्यते ॥
पर्व्वण्यमुं विधायेशि वाञ्छितार्थं प्रसाधयेत् ।
षण्मासमेनं विदधत्कदाप्यपतितं प्रिये ॥
साक्षाद्देवीपुत्र एव भवेद्भैरव एव वा ।
अमुं न्यासं प्रकुर्व्वाणः पर्व्वण्यथ सदापि वा ॥

कस्मै चिदपि न क्रुध्यात्त्वनमेत्त्वशपेदपि ।
न निष्ठुरञ्च भाषेत नचापत्यमृ[६० ब]ति स्मरेत् ॥
यस्मै क्रुध्यात्स म्रियेत षण्मासाभ्यन्तरे नरः ॥

इत्यादिनाथविरचितायां महाकालसंहितायां षोढान्यासोद्धारो नाम
द्विशताधिकाष्टचत्वारिंशत्तमः पटलः

देव्युवाच ॥

महायोगिन्महाकाल करुणाम्बुनिधे शिव ।
षोढान्यासः श्रुतस्त्वत्तो महासिद्धिर्म्महाफलः ॥
यत्नेन विधृतश्चापि मया भक्तिप्रवीणया ।
त्रैलोक्यमोहनं नाम कवचं मेवुना वद ॥
कवचत्वेन यद्देवी शिवायादात् स्वयं मुदा ।
तत् कीदृशं हि भविता तत्र कौतूहलं मम ॥
यदि प्रसन्नोसि मयि तदेदं वद सुव्रत ।
सर्व्वस्मादधिकं ह्येतत् त्वयैव समुदीरितम् ॥
नित्यमामुञ्चसि त्वञ्च ज्ञातो मम तदाग्रहः ।

श्रीमहाकाल उवाच ॥

ममैव दोषो देवेशि महांस्तेनाणुरप्यहो ॥
यत्पूर्व्वमेव पुरतस्तव तस्या भिदा कृता ।
नोचेत् किमर्थमप्राक्षीरतो निन्दे स्वमात्मना ॥
मम चेतस्यभूदित्थं त्वयेदं विस्मृतं भवेत् ।
नविस्मरत्युक्तगुप्तं स्त्रियो हीति श्रुतिप्रथाः ॥
त्वं हि सर्व्वोत्तमा स्त्रीणां कथं नैव स्मरिष्यसि ।
अतः परमिदं गोप्यं मया त्वत्तः कथं भवेत् ॥

शरीरार्द्धञ्च भवसि कथमात्मनि गोपनं ।
तस्मात्तव प्रवक्ष्यामि नोचेद्दृक्षसि मां कथं ॥
श्रद्धां भक्तिं तव प्रेक्ष्य विवक्षा मम जायते ।
देवि नैतादृशाः काश्चित् सिद्धयः सन्ति भूतले ॥
त्रैलोक्यमोहनेऽधीते या नैव स्युः करस्थिता ।
पुनरेकम्मया प्रोच्यमानन्देवि निशामय ॥
कर्म्मानुरूपं जन्म स्याद्देहो जन्मनि जन्मनि ।
देहे देहे तथा प्राणास्तथा सर्व्वेन्द्रि[६१ क]याणि च ॥
तेषु तेषु धनं राज्यं भोगा रत्नं स्त्रियो गृहं ।
सर्व्वं नरस्य सुलभं ननु त्रैलोक्यमोहनं ॥
चिच्छेदिषूणां मूर्द्धानं सर्व्वस्वं ददतामपि ।
राज्यं धनं स्त्रियः प्राणानुपढौकयतामपि ॥
सर्व्वथा देवि नाख्येयं त्रिसत्यं ते ब्रवीम्यहं ।
शिष्यस्य सिद्धिः कथिते गुरोस्तु मरणं भवेत् ॥
समासादुपदेशोयं मया ते समुदीरितः ।
मृत्युर्न्न मम तस्मात्तु उपदेक्ष्यामि सुव्रते ॥
लोभादन्ये ये प्रदद्युर्म्मृत्युवक्त्रं विशन्ति ते ।
उपदेशं विना ये वै त्रैलोक्याकर्षणस्य हि ॥
त्रैलोक्यमोहनं नाम पठन्ति कवचं त्विदम् ।
सद्यस्ते मरणं यान्ति भक्षिता योगिनीगणैः ॥
उपदेक्ष्यामि तस्मात्त्वां वध्यतामञ्जलिष्प्रिये ।
सावधाना स्थिरा भूत्वा गदतोनुगदस्व मे ॥
त्रैलोक्यमोहनस्यास्य कवचस्य महेश्वरि ।
त्रिपुरारिर्ऋषिष्प्रोक्तो विराट् छन्द उदीरितम् ॥

देवी भगवती कामकलाकाली प्रकीर्त्तिता ।
फ्रें बीजं बीजमुद्दिष्टं कामार्णं कीलकं मतं ॥
योगिनीशक्तिरुद्दिष्टा डाकिनीतत्त्वमुच्यते ।
विनियोगोस्य कथितः पुरुषार्थचतुष्टये ॥
देवीकामकलाकालीप्रीत्यर्थे च विशेषतः ।
शत्रुक्षयार्थं राज्याप्त्यै प्रयोगोस्य वरानने ॥
ओं ऐं श्रीं क्लीं शिरः पातु फ्रें ह्रीं छ्रीं मदनातुरा ।
स्त्रीं ह्रूं क्षौं ह्रीं लं ललाटं पातु ख्फ्रें क्रौं करालिनी ॥
आं ह्रौं फ्रों क्षूं मुखं पातु क्लूं ड्रं थ्रौं चण्डनायिका ।
हूं त्रैं च्लूं मौः पातु दृशौ प्रीं ध्रीं क्ष्रीं जगदम्बिका ॥
क्रूं खूं घ्रीं च्लीं पातु कर्णौ ज्रूं प्लैं रुः सौं सुरेश्वरी ।
गं प्रां ध्रीं थ्रीं हनू पातु अं आं इं ईं श्मशानिनी ॥
जूं डुं ऐं औं [६१ ब] भ्रुवौ पातु कं खं गं घं प्रमाथिनी ।
चं छं जं झं पातु नासां टं ठं डं ढं भगाकुला ॥
तं थं दं धं पात्वधरमोष्ठं पं फं रतिप्रिया ।
बं भं यं रं पातुदन्तान् लं वं शं सं च कालिका ॥
हं क्षं क्षं हं पातु जिह्वां सं शं वं लं रताकुला ।
वं यं भं बं च चिबुकं पातु फं पं महेश्वरी ॥
धं दं थं तं पातु कण्ठं ढं डं ठं टं भगप्रिया ।
झं जं छं चं पातु कुक्षौ घं गं खं कं महाजटा ॥
ह्सौः ह्स्ख्फ्रें पातु भुजौ क्ष्मूं म्रैं मदनमालिनी ।
ङां त्रीं ग्लूं रक्षताज्जत्रू नैं मौं रक्तासवोन्मदा ॥
ह्रां ह्रीं ह्रूं पातु कक्षौ मे ह्रैं ह्रौं निधुन प्रिया ।
क्लां क्लीं क्लुं पातु हृदयं क्लैं क्लौं मुण्डावतंसिका ॥

श्रां श्रीं श्रूं रक्षतु करौ श्रैं श्रौं फेत्काररराविणी ।
क्लां क्लीं क्लूं अंगुलीः पातु क्लें क्लौं च नारवाहिनी ॥
च्रां च्रीं च्रूं पातु जठरं च्रैं च्रौं संहाररूपिणी ।
छ्रां छ्रीं छ्रूं रक्षतान्नाभिं छ्रैं छ्रौं सिद्धिकरालिनी ॥
स्त्रां स्त्रीं स्त्रूं रक्षतात् पार्श्वौ स्त्रैं स्त्रौं निर्वाणदायिनी ।
फ्रां फ्रीं फ्रूं रक्षतात्पृष्ठं फ्रैं फ्रौं ज्ञानप्रकाशिनी ॥
क्षां क्षीं क्षूं रक्षतु क्षैं क्षौं नृमुण्डमालिनी ।
ग्लां ग्लीं ग्लूं रक्षतादूरू ग्लैं ग्लौं विजयदायिनी ॥
व्लां व्लीं व्लूं जानुनी पातु व्लैं व्लौं महिषमर्दिनी ।
प्रां प्रीं प्रूं रक्षताज्जंघे प्रैं प्रौं मृत्युविनाशिनी ॥
थ्रां थ्रीं थ्रूं चरणौ पातु थ्रैं थ्रौं संसारतारिणी ।
ॐ फ्रें सिद्धिकरालि ह्रीं छ्रीं हूं स्त्रीं फ्रें नमः ॥
सर्व्वसंधिषु सर्व्वांगं गुह्यकाली सदावतु ।
ॐ फ्रें सिद्धि ह्नुस्फ्रें ह्नफ्रें ख्फ्रें करालि ख्फ्रें ह्नस्फ्रें ह्नफ्रें फ्रें
ॐस्वाहा ॥ रक्षताद्घोरचामुण्डा—तु—कलेवरं ह्क्षम्स्त्र्यूं
अव्यात्सदाभद्रकाली [६२ क] प्राणानेकादशेन्द्रियां ॥
ह्रीं श्रीं ॐ स्फ्रें ह्स्फ्रें ह्नुस्फ्रें ह्क्ष्म्ल्व्र्यूं न्क्ष्रीं नज्व्रीं स्त्रीं छ्रीं स्फ्रें ठ्रीं
ध्रौं नमः ।
यत्रानुक्तस्थलं देहे यावत्तत्र च तिष्ठति ।
उक्तं वाऽप्ययवानुक्तं करालदशनावतु ॥
ॐ ऐं ह्रीं श्रीं क्लीं हूं स्त्रीं ध्रीं फ्रें क्षूं क्शौं क्रौं ग्लूं ।
स्फ्रें प्रीं ठ्रीं थ्रीं ट्रैं व्लौं फट् नमः स्वाहा ॥
सर्व्वमापादकेशाग्रं कालीकामकलावतु ।
एतत्ते सर्व्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
एतेन कवचेनैवं यदा भवति गुण्ठितः ॥

वज्रात् सारतरं तस्य शरीरं जायते तदा ।
शोकदुःखामयैर्म्मुक्तः सद्योऽह्यमरतां व्रजेत् ॥
आमुच्यानेन देहं स्वं यत्र कुत्रापि गच्छतु ॥
युद्धे दावाग्निमध्ये च सरित्पर्वतसिन्धुषु ।
राजद्वारे च कान्तारे चौरव्याघ्राकुले पथि ॥
विवादे मरणे त्रासे महामारीगदादिषु ।
दुःस्वप्ने बंधने घोरे भूतावेशग्रहोद्गतौ ॥
विचर त्वं हि रात्रौ च निर्भयेनान्तरात्मना ।
एकावृत्त्याऽघनाशः स्यात् त्रिवृत्त्या चायुराप्नुयात् ॥
शतावृत्त्या सर्व्वसिद्धिः सहस्रैः खेचरो भवेत् ।
वल्लभेयुतपाठेन शिव एव न संशयः ॥
किंवा देवि—जानेः सत्यं सत्यं ब्रवीमि ते ।
चतुस्त्रैलोक्यलाभेन त्रैलोक्यविजयी भवेत् ॥
त्रैलोक्याकर्षणो मंत्रस्त्रैलोक्यविजयस्तादा ।
त्रैलोक्यमोहनं चैतत् त्रैलोक्यवशकृन्मनुः ॥
एतच्चतुष्टयं देवि संसारेष्वतिदुर्ल्लभं ।
प्रसादात्कवचस्यास्य के सिद्धि नैव लेभिरे ॥
संवर्त्ताद्याश्च ऋषयो मारुत्राद्याद्या(मारुत्राद्याः?) महीभुजः ।
विशेषतस्तु भरतो लब्धवान्य(त्?)छृणुष्व तत् ॥
जाह्नवी यमु[६२ ख]ना रेवा कावेरी गोमतीष्वयम् ।
सहस्रमश्वमेधानामेकैकत्राजहार हि ॥
याजयित्रे मातृपित्रे त्वेकैकस्मिन्महाक्रतौ ।
सहस्रं यत्र पद्मानां कण्वायादात्सवर्म्मणां ।
सप्तद्वीपवतीं पृथ्वीं जिगाय त्रिदिनेन यः ॥

नवायुतञ्च वर्षाणां योजीवत् पृथिवीपतिः ।
अव्याहतरथाश्वो यः स्वर्गपातालमीयिवान् ॥
एवमन्योपि फलवानेतस्यैव प्रसादतः ।
भक्तिश्रद्धापरायान्ते मयोक्तं परमेश्वरि ॥
प्राणात्यये नोवाच्यं त्वयान्यस्मै कदाचन ।
देव्यदात् त्रिपुरघ्नाय स मां प्रादादहन्तथा ।
तुभ्यं संवर्त्तऋषये प्रादां सत्यं ब्रवीमि ते ॥
संवर्त्तो दास्यति प्रीतो देवि दुर्व्वाससे त्विमम् ।
दत्तात्रेयाय स पुनरेवंलोके प्रतिष्ठितम् ॥
वक्त्राणां कोटिभिर्देविवर्षाणामपि कोटिभिः ।
महिमा वर्णितुं शक्यः कवचस्यास्य नो मया ॥
पुनर्व्ब्रवीमि ते सत्यं मनो दत्त्वा निशामय ।
इदं न सिद्धयते देवि त्रैलोक्याकर्षणं विना ॥
ग्रहीत्रे तुष्यते देवी दात्रे कुप्यति तत्क्षणात् ।
एतज्ज्ञात्वा यथाकर्त्तुमुचितं तत् करिष्यसि ॥

इत्यादिनाथविरचितायां महाकालसंहितायां त्रैलोक्यविजयं कवचं नाम द्विशताधिकोनपञ्चाशत्तमः पटलः ॥

श्रीमहाकाल उवाच ।

अथ वक्ष्ये महेशानि देव्याःस्तोत्रमनुत्तमं ।
यस्य स्मरणमात्रेण विघ्ना यान्ति पराङ्मुखाः ॥
विजेतुं प्रतस्थे यदा कालकस्यासुरान् रावणो मुञ्जमालिप्रवर्हान् ।
तदा कामकालीं स तुष्टाव वाग्भिर्जिगीषुर्मृधे बाहुवीर्य्येण सर्व्वान् ॥
महावर्त्तभामासृगब्भ्युत्थवीची[ ६३ क ]परिक्षालिता श्रान्तकंथश्मशाने।
चितिप्रज्वलद्वह्निकीलाजटाले शिवाकारशावासने सन्निषण्णां ॥

महाभैरवीयोगिनीडाकिनीभिः करालाभिरापादलंबत्कचाभिः ।
भ्रमन्तीभिरापीय मद्यामिषास्नान्यजस्रं समं सञ्चरन्तीं हसन्तीम् ॥
महाकल्पकालान्तकादम्बिनीत्विट्परिस्पर्द्धिदेहद्युति घोरनादा ।
स्फुरद्द्वादशादित्यकालाग्निरुद्रज्वलद्विद्युदोघप्रभादुर्निरीक्ष्यां ॥
लसन्नीलपाषाणनिर्म्माणवेदिप्रभश्रोणिविम्बां चलत्पीवरोरुम् ।
समुत्तुंगपीनायतोरोजकुंभां कटिग्रंथितद्वीपिकृत्युत्तरीयाम् ॥
स्रवद्रक्तवल्गन्नृमुण्डावनद्धसृगाबद्धनक्षत्रमालैकहारां ।
मृतब्रह्मकुल्योपक्लृप्ताङ्गभूषां महाट्टाट्टहासैर्जगत्त्रासयन्तीं ॥
निपीताननान्तामितोद्वृत्तरक्तोच्छलद्धारया स्नापितोरोजयुग्मां ।
महादीर्घदंष्ट्रायुगन्यञ्चदञ्चल्ललल्लेलिहानोग्रजिह्वाग्रभागां ॥
चलत्पादपद्मद्वयालम्बिमुक्तप्रकम्पालिसुस्निग्धसंभुग्नकेशां ।
पदन्यासभासंभारेति(संभार?)भीताहिराजाननोद्गच्छदात्मस्तुतिव्य-
स्तकर्णां ॥
महाभीषणां घोरविंशार्द्धवक्त्रांस्तथासप्तविंशान्वितैर्ल्लोचनैश्च ।
पुरादक्षवामे द्विनेत्रोज्वलाभ्यां तथान्याननं चि(च)त्रिनेत्राभिरामाम् ॥
लसद्वीपिहर्य्यक्षफेरुप्लवंगक्रमेलर्क्षतार्क्षद्विपग्राहवाहैः ।
मुखैरीदृशाकारितैर्भ्राजमानां महापिंगलोद्यज्जटाजूटभारां ॥
भुजैः सप्तविंशांकितैर्व्वामभागे युतां दक्षिणे चापि तावद्भिरेव ।
क्रमाद्रत्न मा[६३ ख]लां कपालं च शुष्कं ततश्चर्मपाशं सुदीर्घं दधानां ॥
ततः शक्तिखट्वाङ्गमुण्डं भुशुण्डीं धनुश्चक्रघंटाशिशुप्रेतशैलान् ।
ततोनारकङ्कालवभ्रूरगोन्मादवंशीन्तथा मुग्दरं वह्निकुण्डम् ॥
अथो डम्मरुं पारिघं भिन्दिपालं तथा मौशलं पट्टिशं प्राशमेवं ।
शतघ्नीं शिवापोतकं चाथ दक्षे महारत्नमालां तथा कर्त्तृखड्गौ ॥
चलत्तर्ज्जनीमङ्कुशं दण्डमुग्रं लसद्रत्नकुम्भं त्रिशूलं तथैव ।
शरान् पाशुपत्यांस्तथा पञ्चकुन्तं पुनः पारिजातं छुरीन्तोमरं च ॥

प्रसूनस्रजं डिण्डिमं गृध्रराजं ततः कोरकं मांसखण्डं श्रुवंञ्च ।
फलं बीजपूराह्वयं चैव सूचीन्तथा पर्शुमित्रं गदायष्टिमुग्रां ॥
ततो वज्रमुष्टिं कुणप्यं सुघोरं तथा लालनं चारयन्तीम्भुजैस्तैः ।
जवापुष्परोचिष्फणीन्द्रोपक्लृप्तक्वणन्नूपुर न्द्वसक्तांघ्रिपद्मां ॥
महापीतकुम्भीनसावद्धनद्धस्फुरत्सर्व्वहस्तोज्वलत्कंकणाञ्च ।
महापाटलद्योतिदर्व्वीकरेन्द्रावसक्ताङ्गदव्यूहसंशोभमानां ॥
महाधूसरत्त्विड्भुजङ्गेन्द्रक्लृप्तस्फुरच्चारुकाटेयसूत्राभिरामां ।
चलत्पाण्डुराहीन्द्रयज्ञोपवीतत्विडुद्भासिवक्षः स्थलोद्यत्कपाटां ॥
पिषङ्गोरगेन्द्रावनद्धावशोभामहामोहवीजांगसंशोभिदेहां ।
महाचित्रिताशीविषेन्द्रोपक्लृप्तस्फुरच्चारुताटङ्कविद्योतिकर्णाम् ॥
वलक्षाऽहिराजावनद्धोर्द्ध्वभासिस्फुरत्पिङ्गलोद्यज्जटाजूटभारां ।
महाशोणभोगीन्द्रनिस्यूत मु[६४ क]ण्डोल्लसत्किङ्किणीजाल
संशोभिमध्यां ॥
सदा संस्मरामीदृशीं कामकालीं जयेयं सुराणां हिरण्योद्भवानाम् ।
स्मरेयुर्हि येऽन्येऽपि ते वै जयेयुर्विपक्षान्मृधे नात्रसन्देहलेशः ॥
पठिष्यन्ति ये मत्कृतं स्तोत्रराजं मुदा पूजयित्वा सदा कामकालीम् ।
न शोको न पापं न वा दुःखदैन्यं न मृत्युर्न रोगो न भीतिर्नचापत् ॥
धनं दीर्घमायुः सुखंबुद्धिरोजो यशः शर्म्मभोगःस्त्रियः सूनवश्च ।
श्रियो मङ्गलं बुद्धिरुत्साह आज्ञा लयः शर्म्मविद्या भवेन्मुक्तिरन्ते ॥
इति महावामकेश्वरतंत्रे कालकेयहिरण्यपुरविजये रावणकृतकामकाली-
भुजंगप्रयातस्तोत्रराजं समाप्तम् ।

देव्युवाच ॥

महायोगिन् महाकाल करुणाम्बुनिधे शिव ।
अत्यद्भुतमिदं त्वत्तः श्रुतं कवचमुत्तमम् ॥

विशेषेण श्रुतं सर्व्वं मया चैतन्महेश्वर ।
इदानीं श्रोतुमिच्छामि ममप्रीतिकरं प्रिय ॥
कीदृशेन विधानेन आशु सा च प्रसीदति ।
तत् कथयस्व देवेश यदि(स्नेहोऽस्ति?)मेऽस्ति स्नेहस्तव ॥

श्रीमहाकाल उवाच ॥

अथ सर्व्वप्रयोगानां राजानं व्याहरामि ते ।
यदेकवारकरणात् कृतकृत्योऽभिजायते ॥
महागोप्यतमन्देवि प्रसन्नाकलसं(सकल?)म्विधिम् ।
विशेषतस्तथाशक्तिसामरस्यकरं विधिं ॥
गुरुदैवतमंत्राणां यथैकत्वं फलप्रदं ।
तीर्थदैवतशक्तीनां तथैकत्वं महाफलम् ॥
क्षत्रविट्शूद्रजातीनामेष एव विधिर्म्मतः ।
देवस्य मध्यतोल्लेखादुभयत्र समाक्रिया ॥
द्विजातेः केवलंतीर्थे नाऽधि [६४ ख] कारः प्रशस्यते ।
निन्दा तु प्राणनाशाय त्यागात्सिद्धिक्रियाफलः ॥
निन्दात्यागौ न कर्त्तव्यौ देवि सिद्धिमभीप्सता ।
प्रत्यष्टम्यां चतुर्द्दश्यां संक्रान्तौ मंगलेऽह्नि ॥
व्यतीपातोपरागे च स्वेच्छा यस्मिन्दिनेऽपिवा ।
कल्पिताच्चादिसंभारः कृतनित्यक्रियो दिवा ॥
भुक्तान्नो वाप्यभुक्तान्नो विधि कुर्य्यान्महानिशि ।
तीर्थशक्त्योर्भिदां वच्मि तत्र चेतो निवेशय ॥
माध्वीका पानसी चैव खार्ज्जूरी च मधूकिका ।
गौडी ताली चतुर्जाता तण्डुली पुष्पसंभवा ॥

माध्वीका च गौधूमी तथौषधिशिफात्मिका ।
क्षत्रविट्शूद्रजातीनां प्रशस्ता द्वादशैव हि ॥
मधुक्षीरं तथाद्यंच नारिकेलोदकं प्रिये ।
ब्राह्मणानामिदं शस्तं फलानां च रसास्तथा ॥
शक्तिश्च द्विविधा प्रोक्ता स्वकीया परकीयका ।
अभावे परकीयायाः स्वीयां शक्तिं प्रकल्पयेत् ॥
न व्यंगीं नाधिकाङ्गींञ्च न रुक्षां न शिरालिनीं ।
न पिङ्गां नासिकां श्यामां जरन्तीञ्च करालिनीं ॥
नादृष्टरजसं कन्यां नार्त्तवं समुपागतां ।
नार्त्तवंतीञ्च वा बालां नापत्यां न गलत्कुचां ॥
गौरांगीं युवतीं रम्यां पीनोन्नतपयोधरां ।
विशालजघनां चारुदन्तपंक्तिविराजितां ॥
दीक्षितां कुलमार्गेषु भक्तिश्रद्धापरायणां ।
सदा वचस्कारिणीञ्च भयहीनां हसन्मुखीं ॥
सर्व्वजातीर्द्विजः कुर्याद् विप्रां त्यक्त्वा तु भूमिपः ।
उभे विहाय वैश्यश्च तिस्रः शूद्रश्च वर्ज्जयेत् ॥
भक्तौ दृढ़ायां जातायां [६६ क] सर्व्वा सर्व्वेषु शस्यते ।
तीर्थमित्रमयो वक्ष्मि हैमं वा राजतं तथा ॥
पार्थिवं नारिकेलं वा वात्तीयं सर्व्वं सिद्धिदं ।
तीर्थग्रासेषु पूजायामुभयत्रापि युज्यते ॥
अथ कल्पितपूजादिसंभारो भक्तितत्परः ।
शून्यागारे निर्ज्जने च श्मशाने च चतुष्पथे ॥
गृहे वा निःशलाके स्याद्यत्र वा मनसो रुचिः ।
कुर्याद् गोप्यतमं सर्व्वं पशुर्नेक्ष्यते यथा ॥

प्रक्षालितांघ्रिराचान्त उत्तराभिमुखो विभीः ।
दृढं पद्मासनं कृत्वा व्याघ्रचर्म्मोपरिस्थितः ॥
भूतापसारणं कृत्वा तालैर्दिग्बंधनं तथा ।
अंगन्यासन्ततः कृत्वा करांगन्यासमाचरेत् ॥
मातृकान्यासपीठादिन्यासं कुर्य्यात्पुरोक्तवत् ।
अर्घ्यस्थापनपर्य्यन्तं सर्व्वं कुर्यादतन्द्रितः ॥
ततोगोमयलिप्तायां भूमौ स्वस्तिकाजुषि ।
स्थापयेत्क्षालितं पीठं दारवं धातुमत्तथा ॥
वक्ष्यमाणेन मंत्रेण गोमयालिप्तभूपरि ।
आदौ तारत्रयं प्रोच्य मायायाश्चंचकं ततः ॥
कूर्च्चांकुशमहाक्रोधामृतगुह्यारतिप्रियाः ।
कापालभैरवी नीलचामुण्डाशक्तिमानसाः ॥
योगिनी काली कामगारुडविघ्नतः ।
भारुण्डा खेचरी काम लक्ष्मीमेते त्रिशक्तयः ॥
सद्योजातादिकः पंच कूटाश्च तदनन्तरं ।
दानवाधार धनदा कूर्मानन्तविषामराः ॥
एत्येहिभगवत्येवं ततः पदमुदीरयेत् ।
ततः कामकलाकालिसर्व्वशक्तिपदं ततः ॥
समन्विते इति प्रोच्य प्रसन्नापदमुच्चरेत् ।
शक्तिभ्यां सामरस्यं च त [६१ ख] त उद्गारयेत्सुधीः ॥
कुरुद्वंद्वं मम ततः पूजां गृह्ण युगं वदेत् ।
शत्रून् हन युगं प्रोच्य युगं मर्द्दय पातय ॥
राज्यं मे समुद्धृत्य देहि दापय युग्मकं ।
शाकिनी योगिनी कूर्च्चस्त्रीह्रियां नवकं वदेत् ॥

पञ्चचत्वारिंशवीजमेवं भवति भाविनि ।
फट्त्रयान्ते हृच्छिरोभ्यां मंत्रः सर्व्वशुभावहः ॥
उच्चार्य्यमिं मनुं पीठं स्थापयेत् स्थण्डिलोपरि ।
पुनर्गृहीत्वा सिन्दूरं प्रशस्तं प्रसृतित्रयं ॥
वक्ष्यमाणेन मंत्रेण पीठे मण्डलमाचरेत् ।
प्रणवं शाकिनीवीजं फेत्कारीं योगिनीमपि ॥
चण्डं भूतं परां नादं रौद्रमानन्दमंकुशं ।
फट्पंचकं कामकलाकालीसंबोधनं ततः ॥
घोररावे इलिलतो विकटदंष्ट्र इत्यपि ।
कालिकापालि इति च ..............................॥
नररुधिर इत्युक्त्वा वसामांस इतीति च ।
भोजनप्रियइत्युक्त्वा भगप्रियइतीरयेत् ॥
भगांकुश इति प्रोच्य भगमालिनि चोद्धरेत् ।
भगोन्मादिनि इत्युक्त्वा भगात्तव इतीरयेत् ॥
इहागच्छ युगान्तिष्ठ सन्निधिं कुरु च द्वयं ।
ततश्च भरतोपास्या गुह्यकाल्याश्च षोडशी ॥
ततः कामकलाकाल्यास्त्रैलोक्याकर्षणं मनुः ।
शाकिनी डाकिनीवीजात्फेत्कारीवीजमुद्धरेत् ॥
कूर्च्चंवधूं योगिनीञ्च प्रणवस्य च पञ्चकम् ।
फडन्ते हृच्छिरस्त्रापि महामंत्रोऽयमीरितः ॥
अनेन पीठोपरि हि सिन्दूरैर्म्मण्डलं चरेत् ।
ततः स्नातां शुचिं शक्तिं सर्व्वालङ्कारभूषितां ॥
आनीयानेन मंत्रेण तस्या वस्त्रं विमोचयेत् ।
तारआसादवेतालरुद्रद्रावणभै[६६ क]रवीः ॥

शाङ्करब्रह्मभारुण्डा चामुण्डा कालमारुण्डाः ।
पराकाली इति क्षेत्रपालकामरमा(ह्वयेत्?)ह्वियः ॥
फेत्कारीम्बिशतितमां नमः स्वाहान्तगो मनुः ।
चतुर्व्विंशत्यक्षरेण तां नग्नां कारयेत्सुधीः ॥
सिन्दूरमण्डलस्योर्द्ध कृतपद्मासनां स्त्रियम् ।
उपवेश्य तदङ्के तु पूर्वोक्तङ्कलशं क्षिपेत् ॥
वक्ष्यमाणेन मनुना योनिमण्डलमध्यगम् ।
तारं षड्दीर्घकोऽऋश्च प्रासादांकुशपाशकाः ॥
कूर्च्चं भूतश्च धनदा हयग्रीवकुमारकौ ।
त्रिशक्तिस्नायिनीतत्त्वं कूर्म्मद्रावणदानवाः ॥
ततो जय जयेत्युक्त्वा भगवत्यपि संवदेत् ।
ततः कामकलाकालि सर्व्वेश्वरि पदं ततः ॥
इहागत्य चिरन्तिष्ठ तिष्ठेति तदनन्तरम् ।
ततश्च प्रोच्चरेद्देवि यावत्पूजां करोम्यहं ॥
ततस्त्रयं हि वीजानां पंचानां समनुद्धरेत् ।
शाकिनीयोगिनीक्रोधक्रीवधूनां पृथक्पृथक् ॥
अन्ते फट् यं त्र च स्वाहा कलशस्थापने मनुः ।
इमं मंत्रं गृणन् जुष्टं तस्या योन्युपरि न्यसेत् ॥
ततः पूर्व्वोदितं तीर्थम्भिन्नपात्रस्थितं पुरः ।
आनीयाच्छाद्य हस्ताभ्यां त्रैलोक्याकर्षणं जपेत् ॥
दशकृत्वस्ततो धेनुमुद्रया चावगुण्ठनं ।
दिग्बंधनं छोटिकया कुर्य्याच्च तदनन्तरम् ॥
तस्योपरिष्टात्क्रमशो नवमुद्राः प्रदर्शयेत् ।
शक्तिं कपालं योनिञ्च सामरस्यं ततः परम् ॥

मुद्रासु स्वदर्शितास्वेवं सर्व्वं तद्विफलं भवेत् ।
तत्र दिक्षुविदिक्ष्वेवं शक्तीरष्ट प्रपूजयेत् ॥
इच्छाक्रियासिद्धि ऋद्धिः स्वाहाभी[६६ ख]मा करालिनो ।
चण्डसंकर्षणीचेति दिक्ष्वष्टसु पृथक्स्थितं ॥
मध्येनंगकुलां देवीं गंधपुष्पादिभिर्य्यजेत् ।
त्रैलोक्याकर्षणेनैव मध्ये कामकलामपि ॥
तद्भक्ता गुह्यकालीं वा पूजयेयुर्हि तत्स्थले ।
कुर्य्यात्ततः शापमोक्षं कुल द्रव्यस्य भाविनि ॥
वैदिकागममंत्राभ्यां द्रव्यशापविमोक्षणं ।
तत्रादौवैदिकं वच्मि कथयिष्ये ततः परम् ॥
एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवं ।
कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम् ॥
सूर्य्यमण्डलसंभूते वरुणालयसंभवे ।
अमाबीजमये देवि शुक्रशापाद्विमुच्यतां ॥
वेदानां प्रणवोबीजं ब्रह्मानन्दमयं यदि ।
तेन सत्येन ते देवि ब्रह्महत्यां व्यपोहतु ॥
इमं मंत्रत्रयं देवि वैदिकं परिकीर्त्तितं ।
आगमोक्तं मन्त्रमपि मयोक्तमवधारय ॥
तारं कूर्च्चंडाकिनीञ्च फेत्कारीं योगिनीमपि ।
लक्ष्मीमन्मथचामुण्डाभारुण्डाभैरवीतडित् ॥
वामदेवं ततः कूटमीशानं च ततः परं ।
ततः प्रसन्ने इति च प्रसन्ना तदनन्तरं ॥
रूपिण्यतो भगवति कालिकामकलाक्षरात् ।
शुक्रदत्तं शापमिति मुञ्च मुञ्चापय द्वयं ॥

परमानंदात्सागरस्य्रकारिणीति समुद्धरेत् ।
इदं ब्रह्मभूयादहं ब्रह्मभूयासमित्यपि ॥
पठेद्वारत्रयमिदं बीजानीह त्रयोदश ।
व्युत्क्रमात्पठनीयानि फट्नमो वह्निकामिनी ॥
एतन्मंत्रेणाभिमंत्र्य षड्दीर्घस्मृतंस्मरेत् ।
ब्रह्मशापमोचितायै सुधादेव्यै [६७ क] नमो वदेत् ॥
दशवारान्जपित्वैवं कामषड्दीर्घमुच्चरेत् ।
कुलकृत्स्नमिति प्रोच्य शापं मोचय युग्मकं ॥
अमृतं स्रावय द्वन्द्वं वह्निजायान्तगो मनुः ।
दशवारानिदंजप्त्वा त्रैलोक्याकर्षणं जपेत् ॥
ततो द्रव्यस्य मध्ये तु ध्यायेदानन्दभैरवं ।
आनन्दभैरवीं चापि सामरस्यपदं गतौ ॥
सूर्य्यकोटिप्रतीकाशं चन्द्रकोटिसुशीतलं ।
वृषारूढ नीलकण्ठं सर्व्वाभरणभूषितं ॥
कपालखट्वांगधरं घण्टाडमरुवादिनं ।
पाशाङ्कुशधरं देवं गदामुशलधारिणं ॥
खड्गखेटकचक्रर्ष्टिपर्शुमुद्गरशूलिनं ।
भुशुण्डीधारिणं घोरं वरदाभयपाणिकं ॥
लोहितं देवदेवेशं भावयेद्भैरवीयुतं ।
एवं ध्यात्वा गुह्यबीजंर्व्वषट् तं पूजयेत् त्रिधा ॥
ततोध्यायेत्सुधादेवीञ्चन्द्रकोट्यमृतप्रभां ।
हिमकुन्देन्दुधवलां पचवक्त्रां त्रिलोचनां ॥
अष्टादशभुजैर्य्युक्तां सर्व्वानन्दकरोद्यतां ।
प्रहसन्तीं विशालाक्षीं देवदेवस्य संमुखे ॥

गुह्यबीजैः सुधादेव्यै वौषट् संपूज्य पार्श्वति ।
त्रिकोणचक्रं संलिख्य वामावर्त्तेन वै दले ॥
कोणाच्च दक्षिणादूर्ध्वं दक्षिणादुत्तरावधि ।
अकारादिक्षकारान्तं गुह्यबीजं त्रिवारकं ॥
विलिख्य शाकिनीबीजं दशकृत्वो जपेत्तु तं ।
ध्यात्वामृतत्वं द्रव्येऽस्मिन् शिवशक्ति समागमात् ॥
अमृतीकृत्य धेन्वा तद् वारुणं चाष्टधा जपेत ।
कुर्यात्ततोमृतन्यासं न्यासराजं महोदयम् ॥
न्यासमेनं विना देवि द्रव्यशुद्धिर्न्न जायते ।
पञ्चवि [६७ क] शतितत्त्वानि तावन्त्यत्र स्थलानि च ॥
वक्ष्यमाणेन मंत्रेण तेषु स्थानेषु विन्यसेत् ।
विधाय पुरतो वस्तु वामहस्तकनिष्ठया ॥
तृतीयपर्वाङ्गुष्ठस्य योगान्मुद्राभिजायते ।
परमौनामतां स्पृष्ट्वा तया तत् तत् स्थलं न्यसेत् ॥
आदावेरा ततः स्वांगं ततः शक्ति ततो घटम् ।
मंत्रपाठेन चैकेन न्यसेद्देवि चतुर्ष्वपि ॥
अयमेव विधिर्ज्ञेयो न्यासनिर्व्वाणनामनि ।
न्यासे तथासामरस्ये किन्तु भिन्नं स्थलं भवेत् ॥

इति श्रीमदादिनाथविरचितायां महाकालसंहितायां पूजाविधिर्नाम पटलः ।

श्री महाकाल उवाच ॥

ततः परं प्रकुर्व्वीत न्यासं देव्यमृतान्वयम् ।
दोषनाशगुणाधिक्ये जायते तेननिश्चितं ॥

न्यासस्यास्यामृताख्यस्य कात्यायनऋषिर्म्मतः ।
छन्दोविराडितिख्यातं कालीकामकलासुरी ॥
कामवीजं कीलकं स्याद्योगिनीशक्तिरुच्यते ।
वधूवीजमिह प्रोक्तं विनियोगः प्रकीर्त्तितः ॥
आनन्दानुभवायोच्चैरथवा सर्व्वसिद्धये ।
पंचविंशतिपात्राणि पूर्व्वोक्तानि प्रकल्पयेत् ॥
साधाराणि क्रमाद्देवि व्यत्यासं नैव कल्पयेत् ।
एतन्न्यासे प्रात्यहिके प्रोक्तं मुक्त्वा समाचरेत् ॥
ज्ञानेच्छाकृतिधर्म्माश्च वैराग्यैश्वर्य्यमित्यपि ।
शक्तिः कैवल्यमुत्साहधैर्य्ये गुप्तविवेककौ ॥
विकारः सुखमानन्दः संज्ञा पुण्यक्रिया तथा ।
विकृतिः प्रकृतिश्चैवाहंकारोमहदादिकः ॥
तन्मात्रलिंगं परमात्मानौ चेतिप्रकी[६८ क]र्त्तितौ ।
पुनस्तत्त्वान्तरं पंचविंशं देवि निशामय ॥
शिवेश्वरौ शुद्धिविद्ये लिङ्गजीवात्मशम(सू)क्ष्मकाः ।
अविद्या नियतिः कालः कला रागः कुलामृतं ॥
बुद्धिर्माया मनुः कामो रजःसत्त्वं तमस्तथा ।
युक्तिः सिद्धिः सामरस्यं पंचविंशमिदं क्रमात् ॥
शिरो ललाटास्यकण्ठाः स्कंधौ चापि कदोनिकौ ।
मणिवंधावंगुलीनां मूलाग्रौ परिकीर्त्तितौ ॥
रं क्षणौ जानुनीगुल्फौ पादांगुल्यंघ्रिकाघ्नकाः ।
व्यापकं सर्व्वशारीरं पंचविंशत्तमं प्रिये ॥
तारवाग्भवह्रींकूर्च्चवधूलक्ष्मीमनोभुवाम् ।
पाशांकुशमहाक्रोधभूतप्रासादविद्युतां ॥

पराचण्डामृतप्रेत फेत्कारी शाकिनी रतिः ।
पंचकूटास्ततात्पुरुषाश्चामुण्डा भैरवी विषाः ॥
ब्रह्मवेतालभारुण्डा नीलद्रावणमारसाः ।
वज्रशांकरकापालरौद्रानन्दगरुत्मता ॥
चत्वारिंशच्च बीजानामुद्धरेत्प्रथमं सुधीः ।
इदममृतीकुरुयेति पदंदद्यात्ततः परं ॥
परमात्मनीतिसंलिख्य(पञ्चवा)रमितीरयेत् ।
जुषस्व वह्निजायान्त एकषष्ठयक्षरो मनुः ॥
प्रतिवारं मन्त्रपाठं सकृद्वापि प्रयोजयेत् ।
ज्ञानात्मने शिवायेति प्रोक्त्वा शीर्षं न्यसेत्प्रिये ॥
एवं पूर्वोक्तविधिना त्रितयं त्रितयं वदेत् ।
प्रोक्षण्यादाय पीयूषं तत्तत्पात्रे निवेशयेत् ॥
तेनैव मंत्रेण सकृत्प्रतिवारमथापि वा ।
पुनरादाय षट्पात्राण्यन्यानि परिकल्पयेत् ॥
वीरो भोगः शक्तिकुलं गुरुदैवतमेव च ।
तत्रैकषष्ठयक्षरिणा प्रत्येकं मनुनार्च्चयेत् ॥
सामरस्यं च निर्व्वाणमत्रैव समये चरेत् ।
वक्ष्यमाणेनमं[६८ ख]त्रेण तद्वस्तु स्थापयेद्घटे ॥
प्रणवः शाकिनी कूर्च्चं फेत्कारी भोग मन्मथः ।
लज्जाप्रेतरमामैवसुधाकालीरतिक्रमाः ॥
संहाराज्ञाख्यभासाज्ञाविशुद्धयानाहतप्रभाः ।
बृहद्रथन्तरज्येष्ठपुण्डरीकमहाव्रतान् ॥
सौत्रामण्यश्वमेधैडाविश्वजित्सिद्धवारुणान् ।
कूटानष्टादशैतांस्तु प्रोच्चरेत्तदनन्तरम् ॥

पञ्चामृतं समुद्धृत्य सुधारूपेण चोद्धरेत् ।
कुंभेस्मिन्संविश द्वन्द्वं तिष्ठापि सन्निधिकुरु ॥
सप्तविंशत्सुधादीनि प्रतिलोमं ततोवदेत् ।
अन्तेस्त्रत्रितयं हार्द्वन्हिजायान्तगोमनुः ॥
इतिसंस्थाप्य पीयूषं कुंभे आवाह्य कालिकां ।
पुष्पस्रजाछाद्य घटं मृत्विङ्नागांकमण्डितं ॥
दशोपचारैः संपूज्य स्तुत्वा नत्वा विधूप्य च ।
पंचविंशतिपात्राणां देव्या मध्ये च सम्मितं ॥
पात्रं संस्थाप्य साधारं योनिमुद्रां प्रदर्श्य च ।
भूमौ त्रिकोणमालिख्य तद्बहिश्चतुरस्रकं ॥
आधारशक्तिं संपूज्य पात्रं तस्योपरि न्यसेत् ।
मूलेन पात्रं संवीक्ष्य शाकिन्यस्त्रेण क्षालनम् ॥
तेनैव ताडनं कृत्वा कवचेनावगुण्ठयेत् ।
पुनरन्यघटस्थायिद्रव्यं दक्षिणतो न्यसेत् ॥
पात्रं वामकरे कृत्वा मनुनानेन पूजयेत् ।
ऊहः सर्व्वत्र कर्त्तव्यः स्वेष्टदेव्यास्तु नामनि ॥
तारं त्रपां तथा कूर्च्चं योगिनीं शाकिनीमपि ।
काकिनीं खेचरीनागं भारुण्डात्रिशिखामपि ॥
प्रोच्चार्य वामहस्ते तु देव्याः पात्रं निधापयेत् ।
ततस्तारं च मायां च शाकिनीन्त्रिपुटां स्मरं ॥
मोहाद्यपाशनाय नमउ[६६ क]च्चारयेत्सुधीः ।
डाकिनीह्रीरमाकालवेदीसानुवलिस्त्रियः ॥
उच्चार्य्यसोहदेव्यर्घ्यपात्राधारमितीरयेत् ।
साधयामि नमः प्रोच्य धूपयेत्संविदापुरैः ।

संपूज्य पात्राधारंहि पात्रं संपूजयेत्ततः ।
डाकिनीं च त्रपां लक्ष्मीं तारकं कोणखेदको ॥
आग्नेयास्त्रं सवामश्रु कूटं वहिरथं तथा ।
धर्म्याग्निसोमसूर्याञ्च सकलान्लमईरयेत् ॥
त्रपा रमां समुच्चार्व्याक्षरं य श ह वर्गकं ।
धूम्राञ्चि नीलरक्ता च कपिला विस्फुलिंगिनी ॥
ज्वालिन्यर्चिष्मती हव्यवाहिनी कव्यवाहिनी ।
रौद्री संहारिणी चेति कलां श्रीपादुकान्नमः ॥
इत्याधारं पुनश्चार्घ्यपात्रगर्भं विधूपयेत् ।
वक्ष्यमाणेन विधिना सुगंधिद्रव्यविस्तरैः ॥
तारं लज्जां च लक्ष्मीञ्च कामं मुक्तां नृसिंहकम् ।
सन्धूप्य विन्यसेत्पात्रं त्रिपाद्यां साधकोत्तमः ॥
लज्जां लक्ष्मीं स्मरंकूर्च्चं डाकिनीं शाकिनीं वलिम् ।
सोहाम्बर्घ्यपात्रमुक्त्वा स्थापयामि नमो वदेत् ॥
अथ साधारमर्घ्यं तं पूजयेत् परमेश्वरि ।
लज्जां लक्ष्मीं रथं कामं योगिनीं शाकिनीं सुधां ॥
क्षेत्रं पात्रं गारुडञ्च कूटं च द्वादशाहकं ।
सिद्धिप्रदद्वादशकलात्मने सूर्येतिकीर्त्तयेत् ॥
मण्डलायार्घ्यपात्राय नमउच्चारयेत्ततः ।
त्रपां लक्ष्मीं स्मरं कूर्च्चं वक्ष्यमाणकलादिभिः ॥
श्रीपादुकां नम इति पूजयेत्तदनन्तरम् ।
तपिनी तापिनीचैव भ्रामरी क्लेदिनी तथा ॥
शोधिनी शेधिनी चैव वारुण्याकर्षिणी तथा ।
सुषुम्णा [६६ ब] वृष्टिवाहा च ज्येष्ठा चैव हिरण्यका ॥

पूजयित्वा वामभागे सिन्दूरैर्म्मण्डलं चरेत् ।
उत्थाप्य दक्षिणाद्भागाद्वक्ष्यमाणमनुं वदन् ॥
स्थापयेत्पूर्णकुंभन्तं वामभागस्थ मण्डले ।
प्रणवं वाग्भवं लज्जां लक्ष्मीं कामं च शाकिनीम् ॥
योगिनीन्त्रिशिखां कूर्च्चं फेत्कारीजम्भपंक्तयः ।
सिन्दूरगंधपुष्पाद्यैः कुलकुम्भं प्रपूजयेत् ॥
सृष्टया स्थित्या च संहारा नाख्या भासा कूटकैः ।
ततोलज्जां रमां कूर्च्चं कूटसंहारमेव च ॥
हिरण्यगर्भकूटञ्च आनन्दभैरवाय च ।
वौषट् त्रिवारमुच्चार्य्यं कराभ्यां कुंभमुद्धरेत् ॥
तीर्थसंस्थापने कुंभे पूर्व्वोक्तं मंत्रमुच्चरन् ।
शतार्णं मन्त्रमथवा सहस्रार्णमथापि वा ॥
जपन्पात्रं पूरयीत निःशब्दं सूक्ष्मधारया ।
तारं मैधं त्रपां लक्ष्मीं स्मरकूर्च्चौ च शाकिनीम् ॥
उच्चार्य वक्ष्यमाणेन श्लोकेन पिहितं चरेत् ।
ब्रह्माण्डखण्डसंभूतपोयूषसमतावह ॥
आपूरित महापात्र त्वमशेषरसं वहेः ।
अमृतं नाभ संकूटं सिद्धकूटं समुच्चरन् ॥
संवेष्टयेत् ततः पात्रं मुद्रया लेलिहानया ।
पंचमुद्रां ततः पश्चाद्दर्शये···त्तथा ॥
स्तंभनञ्चतुरस्रञ्च मत्स्यं गोक्षुरमेव च ।
योनिमुद्रा च विज्ञेया पञ्चमुद्रामहाफलाः ॥
अस्मिन्नेवक्षणे देवि पंचविद्यां समुच्चरेत् ।
मैंधत्रपारमा मैंवा अमृते अमृतोद्भवे ॥

अमृतवर्षिण्युच्चार्य्यं कामार्णादमृतं वदेत् ।
ततश्च स्रावयद्वन्द्वं भैरवीबीजमुच्चरेत् ॥
ततः सुधे शुक्रशापंमोच [७० क] येतिप्रकीर्त्तयेत् ।
चतुरन्वयिनां सिद्धिसामर्थ्यं दहयुग्मकं ॥
उक्त्वा महाखेचरीति मुद्रां प्रकटय द्वयं ।
कूर्च्चस्वाहान्तगो मंत्रः प्रथमः परिकीर्त्तितः ॥
मैंघत्रयं ह्लषड् दीर्घसुधाकृन्य ततः परं ।
शापं नाशय इत्युक्त्वा अमृतं स्रावयद्वयं ॥
मन्त्रोद्वितीयः स्वाहान्तस्तृतीयमवधारय ।
मैंधत्रयमुपस्तृप्ताऽपराधान्परिकीर्त्तयेत् ॥
विकारशोधिनि प्रोच्य कुलद्रव्यस्य चेत्यपि ।
विकारान्हर युग्माग्निवल्लभाय तृतीयकः ॥
चतुष्टयं वाग्भवस्य अमृते अमृतोद्भवे ।
इत्युच्चार्य वदेदमृतवर्षिणीति ततः परं ॥
महाप्रकाशयुक्ते च स्वाहान्तोयं चतुर्थकः ।
चतुः सारस्वतं सोमं त्रपाकूर्च्चस्मरस्त्रियः ॥
तिरस्करिणि संबोध्य सकलेति जयेति च ।
वाग्वादिनीतिसकलाततः पशुजनेति च ॥
आभिस्तुपंचविद्याभिः सर्व्वदोषविघातिभिः ।
इति ते कथितो व्यासान्मन्त्रव्यानाऽर्च्चनक्रिया: ॥
वैशेषिकाः क्रियायोगाः प्रयोगा औपचारिकाः ।
सांप्रतं ब्रूहि मे किन्त्वमाकर्णयितुमिच्छसि ॥

इति श्रीमदादिनाथ विरचितायां महाकालसंहितायां नानाप्रयोगकथनं-
नाम द्विशताधिकैक पंचाशत्तमः पटलः

देव्युवाच ।

त्वत्तः श्रुतं मया नाथ देव देव जगत्पते ।
देव्याः कामकलाकाल्या विधानं सिद्धिदायकम् ॥
त्रैलोक्यविजयस्यापि विशेषेण श्रुतो मया ।
तत्प्रसंगेन चान्यासां मन्त्रध्याने तथा श्रुते ॥
इदानीं जायते नाथ शुश्रुषा मम भूय[७० ख]सी ।
नाम्नां सहस्रे त्रिविधमहापापौघहारिणि ॥
श्रुतेन येन देवेश धन्या स्यां भाग्यवत्यपि ।

श्रीमहाकाल उवाच ।

भाग्यवत्यसि धन्यासि सन्देहो नात्र भाविनि ।
सहस्रनामश्रवणे यस्मात्ते निश्चितं मनः ॥
तस्या नाम्नान्तु लक्षाणि विद्यन्ते चाथ कोटयः ।
तान्यल्पायुर्मतित्वेन नृभिर्द्धारयितुं सदा ॥
अशक्यानि वरारोहे पठितुं च दिने दिने ।
तेभ्यो नामसहस्राणि साराण्युद्धृत्य शम्भुना ॥
अमृतानीव दुग्धाब्धेर्भूदेवेभ्यः समर्पितं ।
कानिचित्तत्र गौणानि गदितानि शुचिस्मिते ॥
रूढाण्याकारहीनत्वाद् गौणानि गुणयोगतः ।
राहित्याद्रूढिगुणयोस्तानि सांकेतकान्यपि ॥
त्रिविधान्यपि नामानि पठितानि दिने दिने ।
राधयन्तीक्षितानर्थान्ददत्यमृतमव्ययं ॥
क्षपयन्त्यपमृत्युं च मारयन्ति द्विषोऽखिलान् ।
घ्नन्ति रोगानथोत्पातान्मंगलं कुर्व्वतेऽन्वहं ॥

किमुतान्यत् सदा सन्निधापयत्यर्थिकामपि ।
त्रिपुरघ्नोऽप्यदोनामसहस्रं पठति प्रिये ॥
तदाज्ञयाप्यहमपि कीर्त्तयामि दिनेदिने ।
भवत्यपीदमस्मत्तः शिक्षित्वा तु पठिष्यति ॥
भविष्यति च निर्णीतं चतुर्व्वर्गस्य भाजनं ।
मनोन्यतो निराकृत्य सावधाना निशामय ॥
नाम्नां कामकलाकाल्याः सहस्रम्मुक्तिदायकं ।
ॐ अस्य कामकलाकालीसहस्रनामस्तोत्रस्य श्री ।
त्रिपुरघ्नऋषिरनुष्टुप् छन्दस्त्रिजगन्मयरूपिणी ॥
भगवती श्री कामकलाकाली देवता क्लीं बीजं स्फ्रों ।
शक्तिः हूं कीलकं क्ष्रौं तत्त्वं श्री का[७१ क]मकला-
कालीसहस्रनामस्तोत्रपाठे जपे विनियोगः ॐ तत्सत् ।३।
ॐ क्लीं कामकलाकाली कालरात्रिः कपालिनी ।
कात्यायनी च कल्याणी कालाकारा करालिनी ॥
उग्रमूर्त्तिर्महाभीमा घोररावा भयंकरा ।
भूतिदाभयहन्त्री च भवबन्धविमोचनी ॥
भव्या भवानी भोगाढ्या भुजंगपतिभूषणा ।
महामाया जगद्धात्री पावनी परमेश्वरी ॥
योगमाता योगगम्या योगिनी योगिपूजिता ।
गौरी दुर्गा कालिका च महाकल्पान्तनर्त्तकी ॥
अव्यया जगदादिश्च विधात्री कालमर्द्दिनी ।
नित्या वरेण्या विमला देवाराध्यामितप्रभा ॥
भारुण्डा कोटरी शुद्धा चञ्चला चारुहासिनी ।
अग्राह्यातीन्द्रियागोत्रा चर्च्चरोर्द्धशिरोरुहा ॥

कामुकी कमनीया च श्रीकण्ठमहिषी शिवा ।
मनोहरा माननीया मतिदा मणिभूषणा ॥
श्मशाननिलया रौद्रा मुक्तकेश्यट्टहासिनी ।
चामुण्डा चण्डिका चण्डी चार्वङ्गी चरितोज्ज्वला ॥
घोरानना धूम्रशिखा कंपना कम्पितानना ।
वेपमानतनुर्भीदा निर्भया बाहुशालिनी ॥
उल्मुकाक्षी सर्प्पकर्णी विशोका गिरिनन्दिनी ।
ज्योत्स्नामुखी हास्यपरा लिङ्गालिङ्गधरा सती ॥
अविकारा महाचित्रा चन्द्रवक्त्रा मनोजवा ।
अदर्शना पापहरा श्यामला मुण्डमेखला ॥
मुण्डावतंसिनी नीला प्रपन्नानन्ददायिनी ।
लघुस्तनी लम्बकुचा घूर्णमाना हरांगना ॥
विश्वावासा शान्तिकरी दीर्घकेश्यरिखण्डिनी ।
रुचिरा सुन्दरी कम्रा मदोन्मत्ता मदोत्कटा ॥
[७१ ख] अयोमुखी वह्निमुखी क्रोधनाऽभयदेश्वरी ।
कुडम्बिका साहसिनी खड्गकी रक्तलेहिनी ॥
विदारिणी पानरता रुद्राणी मुण्डमालिनी ।
अनादिनिधना देवी दुर्न्निरीक्ष्या दिगंबरा ॥
विद्युज्जिह्वा महादंष्ट्रा वज्रतीक्ष्णा महास्वना ।
उदयार्क्कसमानाक्षी विन्ध्यशैलसमाकृतिः ॥
नीलोत्पलदलश्यामा नागेन्द्राष्टकभूषिता ।
अग्निज्वालकृतावासा फेत्कारिण्यहिकुण्डला ॥
पापघ्नी पालिनी पद्मा पुण्या पुण्यप्रदा परा ।
कल्पान्ताम्भोदनिर्घोषा सहस्रार्क्कसमप्रभा ॥

सहस्रप्रेतराट्क्रोधा सहस्रेशपराक्रमा ।
सहस्रधनदैश्वर्य्या सहस्रांघ्रिकराम्बिका ॥
सहस्रकालदुष्प्रेक्ष्या सहस्रेन्द्रियसंचया ।
सहस्रभूमिसदना सहस्राकाशविग्रहा ॥
सहस्रचन्द्रप्रतिमा सहस्रग्रहचारिणी ।
सहस्ररुद्रतेजस्का सहस्रब्रह्मसृष्टिकृत् ॥
सहस्रवायुवेगा च सहस्रफणकुण्डला ।
सहस्रयंत्रमथिनी सहस्रोदधिसुस्थिरा ॥
सहस्रबुद्धकरुणा महाभागा तपस्विनी ।
त्रैलोक्यमोहिनी सर्व्वभूतदेववशंकरी ॥
सुस्निग्धहृदया घण्टाकर्णा च व्योमचारिणी ।
शंखिनी चित्रिणीशानी कालसंकर्षिणी जया ॥
अपराजिता च विजया कमला कमलाप्रदा ।
जनयित्री जगद्योनिर्हेतुरूपा चिदात्मिका ॥
अप्रमेया दुराधर्षा ध्येया स्वच्छन्दचारिणी ।
शातोदरी शांभविनी पूज्या मानोन्नताऽमला ॥
ॐ काररूपिणी ताम्रा बालार्क्कसमतारका ।
[७२ क] चलज्जिह्वा च भीमाक्षी महाभैरवनादिनी ॥
सात्विकी राजसी चैव तामसी घर्घराज्वला ।
माहेश्वरी तथा ब्राह्मी कौमारी मानिनीश्वरा ॥
सौपर्णी वायवी चैन्द्री सावित्री नैर्ऋती कला ।
वारुणी शिवदूती च सौरी सौम्या प्रभावती ॥
वाराही नारसिंही च वैष्णवी ललिता स्वरा ।
मैत्र्याय्यंम्नी च पौष्णी च त्वाष्ट्रीवासव्युमारतिः ॥

राक्षसी पावनी रौद्री दात्री रोदस्युदुम्बरी ।
सुभगा दुर्भगा दीना चञ्चुरीका यशस्विनी ॥
महानन्दा भगानन्दा पिच्छिला भगमालिनी ।
अरुणा रेवती रक्ता शकुनी श्येनतुण्डिका ॥
सुरभी नन्दिनी भद्रा बला चातिबलामला ।
उलूपी लम्बिका खेटा लेलिहानान्त्रमालिनी ॥
वैनायिकी च वेताली त्रिजटा भृकुटी मती ।
कुमारी युवती प्रौढा विदग्धा घस्मरा तथा ॥
जरती रोचना भीमा दोलमाला पिचिण्डिला ।
अलम्बाक्षी कुम्भकर्णी कालकर्णी महासुरी ॥
घंटारवाथ गोकर्णा काकजंघा च मूषिका ।
महाहनुर्म्महाग्रीवा लोहिता लोहिताशनी ॥
कीर्त्तिः सरस्वती लक्ष्मीः श्रद्धा बुद्धिः क्रिया स्थितिः ।
चेतना विष्णुमाया च गुणातीता निरञ्जना ॥
निद्रा तन्द्रा स्मिता छाया जृम्भा क्षुदशनायिता ।
तृष्णा क्षुधा पिपासा च लालसा क्षान्तिरेव च ॥
विद्या प्रज्ञा स्मृतिः कान्तिरिच्छा मेधा प्रभा चितिः ।
धरित्री धरणी धन्या धोरणी धर्म्मसन्ततिः ॥
हालाप्रिया हाररतिर्हारिणी हरिणेक्षणा ।
चण्डयोगेश्वरी सिद्धि करा[७२ ख]ली परिडामरी ॥
जगदान्या जनानन्दा नित्यानन्दमयी स्थिरा ।
हिरण्यगर्भा कुण्डलिनी ज्ञानं धैर्य्यञ्च खेचरी ॥
नगात्मजा नागहारा जटाभारावर्ताद्दिनी ।
खड्गिनी शूलिनी चक्रवती वाणवती क्षितिः ॥

घूर्णिधर्त्री नालिका च कर्त्री मत्यक्षमालिनी ।
पाशिनी पशुहस्ता च नागहस्ता धर्नुर्द्धरा ॥
महामुद्गरहस्ता च शिवापोतधरापि च ।
नारखर्प्परिणी लम्बत्कचमुण्डप्रधारिणी ॥
पद्मावत्यन्नपूर्णाच महालक्ष्मीः सरस्वती ।
दुर्गा च विजया घोरा तथा महिषमर्द्दिनी ॥
धनलक्ष्मी······श्चारवारूढा जयभैरवी ।
शूलिनी राजमातंगी राजराजेश्वरी तथा ॥
त्रिपुटोच्छिष्टचाण्डाली अघोरा त्वरितापि च ।
राज्यलक्ष्मीर्जयमहाचण्डयोगेश्वरी तथा ॥
गुह्या महाभैरवी च विश्वलक्ष्मीररुन्धती ।
यन्त्रप्रमथिनी चण्डयोगेश्वर्य्यप्यलम्बुषा ॥
किराती महाचण्डभैरवी कल्पवल्लरी ।
त्रैलोक्यविजया सम्पत्प्रदा मन्थानभैरवी ॥
महामन्त्रेश्वरी वज्रप्रस्तारिण्यङ्गचर्पटा ।
जयलक्ष्मीश्चण्डरूपा जलेश्वरी कामदायिनी ॥
स्वर्णकूटेश्वरीरुण्डा मर्म्मरीबुद्धिवर्द्धिनी ।
वार्त्ताली चण्डवार्त्ताली जयवार्त्तालिकातथा ॥
उग्रचंडा श्मशानोग्रा चण्डा वै रुद्रचण्डिका ।
अतिचण्डा चण्डवती प्रचण्डा चण्डनायिका ॥
चैतन्यभैरवी कृष्णा मण्डली तुम्बुरेश्वरी ।
वाग्वादिनी मुण्डमध्यमत्यनर्घ्या पिशाचिनी ॥
मञ्जीरा रोहिणीकुल्या तुङ्गा पूर्णेश्वरी वरा ।
वि[७३ क]शाला रक्तचामुण्डा अघोरा चण्डवारुणी ॥

धनदा त्रिपुरा वागीश्वरी जयमङ्गला ।
दैगंवरी कुब्जिका च कुडुक्का कालभैरवी ॥
कुक्कुटी संकटा वीरा कर्प्पटा भ्रमराम्बिका ।
महार्णवेश्वरी भोगवती सङ्केश्वरी तथा ॥
पुलिन्दी शवरी म्लेछी पिंगला शवरेश्वरी ।
मोहिनी सिद्धिलक्ष्मीश्च बाला त्रिपुरसुन्दरी ॥
उग्रतारा चैकजटा महानीलसरस्वती ।
त्रिकण्टकी छिन्नमस्ता महिषघ्नी जयावहा ॥
हरसिद्धानंगमाला फेत्कारी लवणेश्वरी ।
चण्डेश्वरी नाकुलीच हयग्रीवेश्वरी तथा ॥
कालिन्दी वज्रवाराही महानीलपताकिका ।
हंसेश्वरी मोक्षलक्ष्मीर्भूतिनी जातरेतसा ॥
शातकर्णा महानीला वामा गुह्येश्वरी भ्रमिः ।
एकानंशाऽभया तार्क्षी बाभ्रवी डामरीतथा ॥
कोरङ्गी चर्च्चिका विघ्ना संसिका ब्रह्मवादिनी ।
त्रिकालवेदिनी नीललोहिता रक्तदन्तिका ॥
क्षेमंकरी विश्वरूपा कामाख्या कुलकुट्टनी ।
कामांकुशा वेशिनी च मायूरी च कुलेश्वरी ॥
इभ्राक्षी द्योनकी (शार्गी) भीमा देवी वरप्रदा ।
धूमावती महामारी मङ्गला हाटकेश्वरी ॥
किराती शक्तिसौपर्णी बान्धवी चण्डखेचरी ।
निस्तन्द्रा भवभूतिश्च ज्वालाघंटाग्निमर्दिनी ॥
सुरङ्गा कौलिनी रम्या नटी चारायणी धृतिः ।
अनन्ता पुञ्जिका जिह्वा धर्म्माधर्म्मप्रवर्त्तिका ॥

वन्दिनी वन्दनीया च वेलाऽहस्करिणी सुधा ।
अरणी माधवी गोत्रा पताका वाग्मयी श्रुतिः ॥
गूढा त्रिगूढा विस्पष्टा मृगाङ्का च निरिन्द्रिया ।
मेनानन्दकरी बोध्री त्रिनेत्रा वेद[७१ ख]वाहना ॥
कलस्वना तारिणी च सत्यासत्यप्रियाऽजडा ।
एकवक्त्रा महावक्त्रा बहुवक्त्रा-घनानना ॥
इन्दिरा काश्यपी ज्योत्स्ना शवारूढा तनूदरी ।
महाशंखधरा नागोपवीतिन्यक्षताशया ॥
निरिन्धना धराधारा व्याधिघ्नी कल्पकारिणी ।
विश्वेश्वरी विश्वधात्री विश्वेशी विश्ववन्दिता ॥
विश्वा विश्वात्मिका विश्वव्यापिका विश्वतारिणी ।
विश्वसंहारिणी विश्वहस्ता विश्वोपकारिका ॥
विश्वमाता विश्वगता विश्वातीता विरोधिता ।
त्रैलोक्यत्राणकर्त्री च कूटाकारा कटंकटा ॥
क्षामोदरी च क्षेत्रज्ञा क्षयहीना क्षरवर्ज्जिता ।
क्षपा क्षोभकरी क्षेम्याऽक्षोभ्या क्षेमदुघा क्षिया ॥
सुखदा सुमुखी सौम्या स्वङ्गा सुरपरा सुधीः ।
सर्व्वान्तर्यामिनी सर्व्वा सर्व्वाराध्या समाहिता ॥
तपिनी तापिनी तीव्रा तपनीयातु नाभिगा ।
हैमी हैमवती ऋद्धिर्वृद्धिर्ज्ञानप्रदा नरा ॥
महाजटा महापादा महाहस्ता महाहनुः ।
महाबला महारोषा महाधैर्य्या महाघृणा ॥
महाक्षमा पुण्यपापध्वजिनी घुर्घुरारवा ।
डाकिनी शाकिनी रम्या शक्तिः शक्तिस्वरूपिणी ॥

तमिस्रा गन्धराशान्ता दान्ता क्षान्ता जितेन्द्रिया ।
महोदया ज्ञानिनीच्छा विरागा सुखिताऽकृतिः ॥
वासना वासनाहीना निवृत्तिर्निर्वृतिः कृतिः ।
अचला हेतुरुन्मुक्ता जयिनी संस्मृतिः च्युता ॥
कपर्द्दिनी मुकुटिनी मत्ताप्रकृतिरूर्ज्जिता ।
सदसत्साक्षिणी स्फीता मुदिता करुणामयी ॥
पूर्वोत्तरा पश्चिमा च दक्षिणाविदिगूहता ।
आत्मारामा शिवारामा रमणी शङ्करप्रिया ॥
वरेण्या वरदा वेणी[७४ क]स्तंभिण्याकर्षिणी तथा ।
उच्चाटनी मारणी च द्वेषिणी वशिनी मही ॥
भ्रमणी भारती भामा विशोका शोकहारिणी ।
सिनीवाली कुहू राकानुमतिः पद्मिनीतिहृत् ॥
सावित्री वेदजननी गायत्र्याहुतिसाधिका ।
चण्डाट्टहासा तरुणी भूर्भुवःस्वःकलेवरा ॥
अतनुरतनुप्राणदात्री मातंगगामिनी ।
निगमाद्धिमणिः पृथ्वी जन्ममृत्युजरौषधी ॥
प्रतारिणी कलालापा वेद्याछेद्या वसुन्धरा ।
प्रक्षुन्ना वासिता कामधेनुर्व्वाञ्छितदायिनी ॥
सौदामिनी मेघमाला शर्व्वरी सर्व्वगोचरा ।
डमरुर्डमरुका च निःस्वरा परिनादिनी ॥
आहतात्मा हता चापि नादातीता बिलेशया ।
पारापारा च पश्यन्ती मध्यमा वैखरीतथा ॥
प्रथमा च जघन्या च मध्यस्थान्तविकाशिनी ।
पृष्ठस्था च पुरःस्था च पार्श्वस्थोर्ध्वतलस्थिता ॥

नेदिष्ठा च दविष्ठा च वहिष्ठा च गुहाश्रया ।
अप्राप्या बृंहिता पूर्णा पुण्यै(वैद्याह्य?)र्नविदनामया ॥
सुदर्शना च त्रिशिखा बृहती सन्ततिर्व्विना ।
फेत्कारिणी दीर्घस्तुक्का भावना भववल्लभा ॥
भागीरथी जाह्नवीच कावेरी यमुना स्मया ।
सिप्रा'गोदावरी' वेण्या विपाशा नर्म्मदा धुनी ॥
श्रेता स्वाहा सामिधेनी स्रुक्स्रुवा च ऋवावसुः ।
गर्व्विता मानिनी मेना नन्दिता नन्दनन्दिनी ॥
नारायणी नारकघ्नी रुचिरा रणशालिनी ।
आधारणाधारतमा धर्म्मा ध्वन्या धनप्रदा ॥
अभिज्ञा पण्डिता मूका वालिशा वागवादिनी ।
ब्रह्मवल्ली मुक्तिवल्ली सिद्धिवल्ली विपह्लवी ॥
आह्लादिनी जितामित्रा साक्षिणी पुन[४७ क]राकृतिः ।
किर्म्मरी सर्वतोभद्रा स्वर्व्वेदी मुक्तिपद्धतिः ॥
सुषमा चन्द्रिका वन्या कौमुदी कुमुदाकरा ।
त्रिसंध्याम्नायसेतुश्च चर्च्चाऽछायारि नैष्ठिकी ॥
कला काष्ठा तिथिस्तारा संक्रातिर्विषुवत्तथा ।
मञ्जुनादा महावल्गु भग्नभेरीस्वनाऽरटा ॥
चित्रा सुप्तिः सुषुप्तिश्च तुरीया तत्त्वधारणा ।
मृत्युञ्जया मृत्युहरी मृत्युमृत्युविधायिनी ॥
हंसी परमहंसी च विन्दुनादान्तवासिनी ।
वैहायसी त्रैदशी च भैमीत्रासातनी तथा ॥
दीक्षा शिक्षा अनूढ़ा च कङ्काली तैजसी तथा ।
सुरी दैत्या दानवी च नरी नाथा सुरी त्वरी ॥

माध्वी खना खरा रेखा निष्कला निर्म्ममा मृतिः ।
महती विपुला स्वल्पा क्रूरा क्रूराशयापि च ॥
उन्माथिनी धृतिमती वामनी कल्पचारिणी ।
वाडवी वडवा खोढा कोला पितृवलायना ॥
प्रसारिणी विशारा च दर्प्पिता दर्प्पणप्रिया ।
उत्तानाधोमुखी सुप्ता वञ्चन्याकुञ्चनी त्रुटिः ॥
क्रादिनी यातनादात्री दुर्ग्गा दुर्ग्गार्तिनाशिनी ।
धराधरसुता धीरा धराधरकृतालया ॥
सु-(च)रित्री तथात्री च पूतना प्रेतमालिनी ।
रंभोर्वशी मेनकाच कलिहृत्कालकृद्दशा ॥
हरीष्टदेवी हेरम्बमाता हर्य्यक्षवाहना ।
शिखण्डिनी कोण्डयिनी वेतुण्डी मन्त्रमय्यपि ॥
वज्रेश्वरी लोहदण्डा दुर्विज्ञेया दुरासदा ।
जालिनी जालपा याज्या भगिनी भगवत्यपि ॥
भौजंगी तुर्व्वरा बभ्रु महनीया च मानवी ।
श्रीमती श्रीकरी गार्द्धी सदानन्दा गणेश्वरी ॥
असंदिग्धा शाश्वता च सिद्धा सिद्धेश्वरी[७५ क]डिता ।
ज्येष्ठा श्रेष्ठा वरिष्ठा च कौशांबी भक्तवत्सला ॥
इन्द्रनीलनिभा नेत्री नायिका च त्रिलोचना ।
बार्हस्पत्या भार्ग्गवी च आत्रेयांगिरसीतथा ॥
धुर्य्याधिहर्त्री धारित्री विकटा जन्ममोचिनी ।
आपदुत्तारिणी दृप्ता प्रमिता मितिवर्जिता ॥
चित्ररेखा चिदाकारा चञ्चलाक्षी चलत्पदा ।
बलाहकी पिंगसटा मूलभूता वनेचरी ॥

खगी करंवमा क्माक्षी संहिता केरवीन्धना ।
अपुनर्भविनी बान्तरिणी यमगञ्जिनी ॥
वर्णातीताश्रमातीता मृडानी मृडवल्लभा ।
दयाकरी दमपरा दंभहीना दृतिप्रिया ॥
निर्व्वाणदा च निर्व्वन्धा भावाभावविधायिनी ।
नैःश्रेयसी निर्व्विकल्पा निर्व्वीजा सर्व्वबीजिका ॥
अनाद्यन्ता भेदहीना बन्धोन्मूलिन्यबाधिता ।
निराभासा मनोगम्या सायुज्यामृतदायिनी ॥
इतीदंनाम साहस्रं नामकोटिशताधिकं ।
देव्याः कामकलाकाल्या मयाते प्रतिपादितम् ॥
नानेन सदृशंस्तोत्रं त्रिषुलोकेषुविद्यते ।
यद्यप्यमुष्य महिमा वर्णितुं नैव शक्यते ॥
प्ररोचनातया कश्चित्तथापि विनिगद्यते ।
प्रत्यहं य इदं देवि कीर्त्तयेद्वा श्रृणोति वा ॥
गुणाधिक्यमृते कोऽपि दोषो नैवोपजायते ।
अशुभानिक्षयं यान्ति जायन्ते मङ्गलान्यथ ॥
पारत्रिकामुष्मिकौ द्वौ लोकौ तेन प्रसाधितौ ।
ब्राह्मणो जायते वाग्मी वेदवेदाङ्गपारगः ॥
ख्यातः सर्व्वासु विद्यासु धनवान् कविपण्डितः ।
युद्धे जयी क्षत्रियः स्याद्दाता भोक्ता रिपुञ्जयः ॥
आहर्त्ता [७५ ख] चाश्वमेधस्य भाजनं परमायुषां ।
समृद्धो धन धान्येन वैश्यो भवति तत्क्षणात् ॥
नानाविधपशूनांहि समृद्ध्या स समृद्धते ।
शूद्रः समस्तकल्याणमाप्नोति श्रुतिकीर्त्तनात् ॥

भुंक्ते सुखानि सुचिरं रोगशोकौ परित्यजन् ।
एवं नार्य्यपि सौभाग्यं भर्तृहार्द्दं सुतानपि ॥
प्राप्नोति श्रवणादस्य कीर्तनादपि पार्व्वति ।
स्वस्वाभीष्टमथान्येऽपि लभन्तेऽस्यप्रसादतः ॥
आप्नोति धार्म्मिको धर्म्मानर्थानाप्नोति दुर्गतः ।
मोक्षार्थिनस्तथा मोक्षंकामुकाः कामिनीम्वराम् ॥
युद्धे जयं नृपाः क्षीणाः कुमार्य्यः सत्पतिन्तथा ।
आरोग्यं रोगिणश्चापि तथा वंशार्थिनः सुतान् ॥
जयं विवादे कलिकृत्सिद्धीः सिद्धीच्छुरुत्तमाः ।
नियुक्ता बन्धुभिःसङ्गं गतायुश्चायुषाञ्चयं ॥
सदा य एतत्पठति निशीथे भक्तिभावितः ।
तस्या साध्यमथाप्राप्यन्त्रैलोक्ये नैव विद्यते ॥
कीर्त्तिं भोगान् स्त्रियः पुत्रान्धनं धान्यं हयान्गजान् ।
ज्ञातिश्रैष्ठ्यंपशून्भूमिं राजवश्यञ्च मान्यताम् ॥
लभते प्रेयसि क्षुद्रजातिरप्यस्य कीर्त्तनात् ।
नास्य भीतिर्न्न दौर्भाग्यं नाल्पायुष्यन्नरोगिता ॥
न प्रेतभूताभिभवो न दोषो ग्रहजस्तथा ।
जायते पतितो नैव क्वचिदप्येष सङ्कटे ॥
यदीच्छसि परं श्रेयस्तत्तुं सङ्कटमेव च ।
पठान्वहमिदं स्तोत्रं सत्यं सत्यं सुरेश्वरि ॥
न सास्ति भूतले सिद्धिः कीर्त्तनाद्या न जायते ।
शृणु चान्यद्वरारोहे कीर्त्यमानं वचो मम ॥
महाभूतानि पञ्चापि खान्येकादश यानि च ।
तन्मात्राणि च [७६ क] जीवात्मा परमात्मा तथैव च ॥

सप्तार्णवाः सप्तलोका भुवनानि चतुर्द्दश ।
नक्षत्राणि दिशः सर्व्वाः ग्रहाः पातालसप्तकं ॥
सप्तद्वीपवतीपृथ्वी जंगमाजंगमं जगत् ।
चराचरं त्रिभुवनम्विद्यास्चापि चतुर्द्दश ॥
सांख्ययोगस्तथा ज्ञानञ्चेतना कर्म्मवासना ।
भगवत्यां स्थितं सर्व्वं सूक्ष्मरूपेण बीजवत् ॥
सा चास्मिन् स्तोत्रसाहस्रे स्तोत्रे तिष्ठति बद्धवत् ।
पठनीयं विदित्वैवं स्तोत्रमेतत्सुदुर्ल्लभं ॥
देवीं कामकलाकालीं भजन्तः सिद्धिदायिनीम् ।
स्तोत्रं चादः पठन्तोहि साधयन्तीप्सितान्स्वकान् ॥

इति महाकालसंहितायां कामकलाकालीसहस्रनामस्तोत्रं संपूर्णं ।

श्रीमहाकाल उवाच—

अथ वक्ष्ये महेशानि महापातकनाशनं ।
गद्यं सहस्रनाम्नस्तु संजीवनतया स्थितं ॥
पठन् यत्सफलं कुर्य्यात्प्राक्तनं सकलं प्रिये ।
अपठन् विफलन्तत्तद्वस्तु कथयामि ते ॥
ॐ फ्रें जय जय कामकलाकालि कपालिनि सिद्धि ।
करालि सिद्धि विकरालि महाबलिनि त्रिशूलिनि ॥

नरमुण्डमालिनि शववाहिनि कात्यायनि महाट्टहासिनि सृष्टिस्थितिप्रलयकारिणि दितिदनुजमारिणि श्मशानचारिणि महाघोररावे अध्यासितदावे अपरिमितबलप्रभावे भैरवीयोगिनी-डाकिनीसहवासिनि जगद्वासिनि स्वपदप्रकाशिनि। पापौघहारिणि

आपदुत्तारिणि अपमृत्युवारिणि बृहन्मद्यमानोदरि सकलसिद्धिकरि चतुर्द्दशभुवनेश्वरि गुणातीतपरमसदाशिवमोहिनि अपवर्गं रसदोहिनि रक्तार्णवलोहिनि अष्टनाग[७६ ख]राजभूषितभुजदण्डे आकृष्टकोदण्डे परमप्रचण्डे मनोवागगोचरे म(ष?)खकोटिमंत्रमय-कलेवरे महाभीषणतरे प्रचलजटाभारभास्वरे।

सजलजलदमेदुरे जन्ममृत्युपाशभिदुरे सकलदैवतमयसिंहास-नाधिरूढे ॥ गुह्यातिगुह्यपराऽपरशक्तितत्त्वरूढे। वासवीकृतमूढे ॥ प्रकृत्यपरशिवनिर्व्वाणसाक्षिणी। त्रिलोकीरक्षिणि दैत्यदानव-भक्षिणि ॥ विकटदीर्घदंष्ट्राकोटिसञ्चूर्णितकोटिब्रह्मकाले। चन्द्रखण्डाङ्कितभाले ॥ देहप्रभाजितमेघजाले। नवयश्चचक्र-नयिनि महाभीमषोडशशयिनि ॥ सकलकुलाकुलचक्रप्रवर्त्तिनि-निखिलरिपुदलकर्त्तिनि ॥ महामारीभयनिर्वर्त्तिनि लेलिहानरसना-करालिनि त्रिलोकीपालिनि ॥ त्र्यस्त्रिंशत्कोटिशस्त्रा(श?)स्त्रशा-लिनि। प्रज्वलप्रज्वलनलोचने ॥ भवभयमोचने ॥ निखिलागमा-देशितपुरोचने। प्रपञ्चातीतनिष्कलतुरीयाकारे ॥ अखण्डानन्दा-धारे निगमागमसारे महाखेचरी सिद्धिविधायिनि ॥ निजपदप्रदा-यिनि महामायिनि घोराट्टहाससंत्रासितत्रिभुवने ॥ चरणकमल-द्वयविन्यासखर्व्वीकृतावने ॥ विहित भक्तावने ॥

ॐ क्लीं क्रों स्फ्रों हूं ह्रीं छ्रीं स्त्रीं फ्रें भगवति प्रसीद-प्रसीद जय जय जीव जीव ज्वल ज्वल प्रज्वल प्रज्वल हस हस नृत्य नृत्य क छ भगमालिनि भगप्रिये भगातुरे भगांकिते भग-रूपिणि भगप्रदे ॥ भगलिंगद्राविणि ॥ संहारभैरवसुरतरसलोलुपे

व्योमकेशि पिंगकेशि महाशंखसमाकुले खर्प्परविहस्तहस्ते रक्तार्णवद्वीपत्रि[७७ क]ये मदनोन्मादिनि ॥ शुष्कनरकपालमालाभरणे विद्युत्कोटिसमप्रभे नरमांसखण्डकवलिनि ॥ वमदग्निमुखि फेरुकोटिपरिवृते ॥ करतालिकात्रासितत्रिविष्टपे । नृत्यप्रसारितपादाघातपरिवर्त्तितभूवलये । पदभारावनम्रीकृतकमठशेषाभोगे । कुरुकुल्ले ॥ कुञ्चतुण्डि रक्तमुखि यमघण्टे चर्च्चिके ॥ दैत्यासुरदैत्यराक्षसदानवकुष्माण्डप्रेतभूतडाकिनीविनायकस्कन्दघोणकक्षेत्रपालपिशाचब्रह्मराक्षसवेतालगुह्यकसर्प्पनागग्रहनक्षत्रोत्पातचौराग्निस्वापदयुद्धवज्रोपलाशनिवर्षविद्युन्मेघविषोपविषकपटकृत्याभिचारद्वेषवशीकरणोच्चाटनोन्मादापस्मारभूतप्रेतपिशाचावेशनदनदीसमुद्रावर्त्तकान्तारघोरांधकारमहामारीबालग्रहहिंस्रसर्वस्वापहारिमायाविद्युद्दस्युवंचकदिवाचररात्रिचरसंध्याचरशृंगिनखिदंष्ट्रिविद्युदुल्कारण्यदरप्रान्तरादिनानाविधमहोपद्रवभंजिनि ॥ सर्व्वमन्त्रतन्त्रयन्त्रकुप्रयोगप्रमर्द्दिनि ॥ षडाम्नायसमयविद्याप्रकाशिनि श्मशानाध्यासिनि ॥ निजबलप्रभावपराक्रमगुणवशीकृतकोटिब्रह्माण्डवर्तिभूतसङ्घे ॥ विराड्पिण्डिसर्व्वदेवमहेश्वरि सर्व्वजनमनोरंजनि सर्व्वपापप्रणाशिनि ॥ अध्यात्मिकाधिदैविकभौतिकादिविविधहृदयाधिनिर्द्दलिनि कैवल्यनिर्व्वाणवलिनि ॥ दक्षिणकालि भद्रकालि चण्डकालि कामकलाकालिकौलाचारव्रतिनि ॥ कौलाचारकूजिनि कुलधर्म्मसाधनि जगत्कारणका[७७ ख]रिणि ॥ महारौद्रि रौद्रावतारे ॥ अवीजे नानावीजे जगद्वीजे कालेश्वरि कालातीते त्रिकालस्थायिनि महाभैरवे भैरवगृहिणि जननि जनजननिर्वतिनि प्रलयानल ज्वालाजालजिह्वे विसर्व्वोरुफेरुपोतलालिनि ॥ मृत्युञ्जयहृदयानन्दकरि

विलोलव्यालकुण्डलउलूकपक्षच्छत्रमहाडामरि विधुतवक्त्रबाहुचरणे सर्व्वभूतदमनि नीलांजनसमप्रभे ॥ योगीन्द्रहृदयाम्बुजासन-स्थितनीलकण्ठदेहार्द्धहारिणि ॥ षोडशकलान्तवासिनि हकारार्द्ध-चारिणि कालसङ्कर्षिणि कपालहस्ते मदघूर्णितलोचने निर्व्वाण-दीक्षाप्रसादप्रदे ॥ निन्दानन्दाविकारिणि मातृगणमध्यचारिणि ॥ त्रयस्त्रिंशत्कोटित्रिदशतेजोमयविग्रहे प्रलयाग्निरोचिनि विश्वकर्त्तृ विश्वाराध्ये विश्वजननि विश्वसंहारिणि विश्वव्यापिके विश्वेश्वरि निरुपमे निर्व्विकारे निरंजने निरीहे निस्तरङ्गे निराकारे परमे-श्वरि परमानन्दे परापरे प्रकृतिपुरुषात्मिके प्रत्ययगोचरे प्रमाणभूते प्रणवस्वरूपे संसारसारे सच्चिदानन्दे सनातनि सकले सकलकला-तीते सामरस्य समर्थिनि केवले कैवल्यरूपे कल्पनातिगे काललोपिनि कामरहिते कामकलाकालि भगवति ॐ स्फ्रें ह्लौः सौः श्रीं ऐं ह्लौं क्रों स्फ्रों सर्व्वसिद्धिं देहि देहि मनोरथान्पूरय पूरय मुक्तिं नियोजय नियोजय भवपाशं समुन्मूलय २ जन्ममृत्युं तारय २ पर-विद्यां प्रकाशय २ अपवर्गं निर्म्मांहि २ संसारदुःखं यातनां विच्छेदय २ पापानि संशम[७८ क]य २ चतुर्व्वर्गं साधय २ ॥ ह्लां ह्लीं ह्लूं ह्लें ह्लौं यान् वयं द्विष्मो ये चास्मान् विद्विषन्ति तान् सर्व्वान् विनाशय २ मारय २ शोषय २ क्षोभय २ मयि कृपां निवेशय २ फ्रें स्फ्रें ह्स्फ्रें हस्फ्रें—हुं स्फ्रों क्लीं ह्रीं जय जय चराचरात्मकब्रह्माण्डो-दरवर्त्तिभूतसंघाराधिते प्रसीद प्रसीद तुभ्यं देवि नमस्ते नमस्ते नमस्ते । इतीदं गद्यमुदितं मंत्ररूपम्वरानने । सहस्रनामस्तोत्रस्य आदावन्ते च योजयेत् ।

अशक्नुवानो द्वौ वारौ पठेच्छेष इमं स्तवं ।
सहस्रनामस्तोत्रस्य तदैव प्राप्यते फलम् ॥

अपठन् गद्यमेतत्तु तत्फलन्न समाप्नुयात् ।
यत्फलं स्तोत्रराजस्य पाठेनाप्नोति साधकः ॥
तत्फलं गद्यपाठेन लभते नात्र संशयः ॥

इति महाकालसंहितायां गद्यकथनन्नाम द्विशताधिकद्विपञ्चाशत्तमः पटलः ॥ २५२ पटलः समाप्तः

देव्युवाच—

भगवन् देव देवेश भक्तानां वांछितप्रद ।
त्वत्प्रसादात् श्रुतं सर्व्वं कामकाल्या विधानकं ॥
सहस्रनामस्तोत्रञ्च तस्य गद्यमनुत्तमं ।
त्रैलोक्यविजयञ्चापि कवचं परमाद्भुतम् ॥
स्तोत्राणां स्तोत्रराजञ्च भुजङ्गप्रयातमद्भुतं ।
एकाक्षरं समारभ्य यावन्तो मनवः पुनः ॥
कामकलामहादेव्यास्तान्मनून् श्रोतुमुत्सहे ।
कथ्यतां मयि ते नाथ यदि तेस्ति स्नेहो मम ॥

श्रीमहाकाल उवाच—

साधु धन्ये महाभागे श्रूयतां वाञ्छितन्तव ।
तारमैधत्रपालक्ष्मीकालीकामरुपःक्रमात् ॥
योगिनीं प्रमदाञ्चैव शाकिनीमंकुशन्तथा ।
प्रासादक्षेत्रपालौ च [७८ ख] पाशभूतौ समुद्धरेत् ॥
ततोऽग्निस्त्री सप्तदशी मरीचिसमुपासिता ।
कर्द्दमोऽस्य ऋषिः प्रोक्तो बृहतीछन्द उच्यते ॥
देवी कामकलाकाली ह्रीं शक्तिर्ह्रूँ च कीलकं । ॥१॥
ह्रींशाकिन्यंकुशसुधायोगिनीप्रमदाकुवः ॥

भूतडाकिनी कल्पान्त फेत्कारी नरसिंहका ।
प्रेतास्त्रशिरसः प्रोक्ताः कपिलोपास्यषोडशी ॥
सनकोऽस्य ऋषिर्ज्ञेयः प्रतिष्ठाछन्द ईरितं ।
देवता कामकाली च ह्यमृते शक्तिकीलके ॥ ॥२॥
डाकिनी सानुतुङ्गा हि सचूडामणिमेखलाः ।
वलिजंभौ सभोगास्त्रौ हिरण्याक्षनवाक्षरी ॥
ऋषीरुचिरछन्द उष्णिग् देवता कामकालिका ।
डाकिनीमेखले शक्तिकीलके परिकीर्त्तिते ॥ ॥३॥
त्रपाद्या डाकिनी कूर्च्चभूतमन्मथयोगिनी ।
वधूश्च शाकिनी स्वाहा लवणस्य दशाक्षरी ॥
छन्दः पंक्तिरथर्व्वऋषिर्देवी कामकलापि च ।
शाकिन्यनंगौ विज्ञेयौ मनोर्व्वै शक्तिकीलके ॥ ॥४॥
कूर्च्चास्त्रशाकिनी प्रोच्य ततः कामकला इति ।
कालिकायै ततः प्रोच्य हार्द्दमन्त्रोऽग्निवल्लभा ॥
वैवस्वतस्य हि मनोर्म्मनुः पञ्चदशाक्षरी ।
ऋषिरत्रिः समुद्दिष्टो छन्दोमध्या प्रकीर्त्तिता ॥
देवीयं शाकिनी कूर्च्चौ कीर्त्तिते शक्तिकीलके । ॥५॥
वेदादिमेधयोगिन्यः शाकिनीकामयोषितः ॥
भूतक्रोधत्रपाज्ञेया दत्तात्रेयेण साधिता ।
ऋषिर्वसन्तवटुकोऽनुष्टुप्छन्द उदीरितं ॥
एषैव देवता ज्ञेया ह्रीमेधे शक्तिकीलके । ॥६॥
श्रृणिर्भूतशाकिनी च डाकिनी भूतपञ्चमा ॥
दुर्व्वासः साधिता ज्ञेया महापञ्चाक्षरी प्रिये ।
[७६ क] गोतमोस्य ऋषिर्ज्ञेयश्छन्दस्त्रिष्टुवुदीरितं ॥

देवतैषा भूतस्तूणी शक्तिकीलकनामकौ । ॥७॥
मैथप्रणवशाकिन्यो डाकिनी प्रलयान्विता ॥
फेत्कारीह्रीरमानंगयोगिनीस्त्रीरुवश्च हृत् ।
चतुर्दशाक्षरो मंत्र उतङ्कसमुपासितः ॥
अस्य ऋषिर्दक्षिणामूर्त्तिः सुतलं छन्द उच्यते ।
देवी देवी कामकला रुग्मे शक्तिकीलके ॥ ॥८॥
रुग्व्रीडाशाकिनी हार्दा विकराला पदं सङे ।
कामडाकिनी भूतान्ते हृच्छीर्षौ कौशिकेश्वरी ॥
ऋषिर्नारद एतस्य शक्वं(क्व?)रीछन्द ईरितं ।
देव्येषैव स्मरो भूतः शक्तिकीलकमिष्यते ॥ ॥९॥
व्रीडायोगिनिकूर्च्चस्त्रीशाकिनीपंच चोद्धरेत् ।
भगवत्यै इति प्रोच्य ततः कामकला इति ॥
कालिकायै तारमेधाङ्कुशकालीरमास्मराः ।
भूतास्त्रयो वह्निस्त्रीत्यूनत्रिंशोर्व्वैराधिता ॥
ऋषिर्व्वत्सस्त्रिवृच्छन्दोदेवीयं शक्तिरंकुशः ।
शाकिनी कीलकं ज्ञेयं योगिनीतत्वमित्यपि ॥ ॥१०॥
योगिनीभूतरुट्कामा अस्त्रपाराशरी मता ।
अंङ्गिराश्चापि गायत्रीऋषिश्छन्दश्च कीर्त्यते ॥
सूरिवं डाकिनीभूतौ विज्ञेयौ शक्तिकीलकौ । ॥११॥
आदौ परापरं कूटं बृहत्कूटं द्वितीयकं ॥
कूटं राथन्तरं पश्चात् ज्ञेया भागीरथी प्रिये ।
छन्दस्त्रिष्टुबृषिर्व्यासो देव्येषा शक्तिकीलकौ ॥
फेत्कारीप्रलयौ ज्ञेयौ डाकिनीतत्वमित्यपि । ॥१२॥
ह्रीभूतक्रोधडाकिन्यः कामफेत्कारिसंयुताः ॥

षडक्षरा बल्युपास्या देवी कामकला प्रिये ।
ऋषिः कात्यायनो ह्यस्य छन्दः स्यात [७६ ख] बृहत्यपि ॥
अधिष्ठात्रीत्वियं देवी स्त्रीकामौ शक्तिकीलकौ । ॥१३॥
कामलक्ष्मीत्रपाकूर्च्चयोगिनीभीरुशाकिनी ॥
डाकिनीमहदामर्षाभूतप्रासाददक्षिणा ।
घ्रृणिकालीतारमेधा संवर्त्तास्यषोडशी ॥
छन्दः पंक्तिर्ऋषिश्चात्रिर्देवीकामकलापि च ।
शक्तिर्हारावलिः कीलः कणिकालत्त्वमीरितं ॥ ॥१४॥
वेदादिसारस्वतकामभूता लज्जा ततो डाकिनि योगिनी च ।
कल्पान्तरा मे तदनुप्रकीर्त्य फेत्कारिकूर्च्चौ तदनुप्रदेयौ ॥
वेतालमस्त्रमथ वह्निनितम्बिनी च प्रोक्तं प्रिये नारदपञ्च-
दश्यां ।
विरूपाक्ष ऋषिः प्रोक्तो जगतीछन्द इत्यपि ॥
अधिष्ठात्री कामकाली बीजशक्ती त्रपारुषौ ।
शक्तितत्वे रमानङ्गौ प्रयोगः सर्व्वसिद्धये ॥ ॥१५॥
आदौ च शांभवं कूटं लज्जाबीजं द्वितीयकं ।
ततः पाशुपतं कूटं योगिनी तदनन्तरं ॥
ततो माहेश्वरं कूटं कूर्च्चशांकरकूटकौ ।
वध्रू श्रीकंठकूटी च शाकिनी स्यात्ततः परं ॥
पुण्डरीकाश्वमेधौ च ततोऽस्त्रं हृच्छिरोऽपि च ।
गरुडोपासिता ज्ञेया महासप्तदशी त्वियं ॥
प्रचेता ऋषिरस्य स्यात्सुतलं छन्द ईरितं ।
देवीकामकला काली फेत्कारी बीजमुच्यते ॥

शक्तिकीलकतत्त्वानि त्रपाकूर्च्चस्मराः क्रमात् । ॥१६॥
लक्ष्मीर्लज्जाकामबीजं योगिनी भील्कालिका ॥
फडन्ता पर्शुरामेण साधिता परमेश्वरि ।
तस्यर्षिः कश्यपो ज्ञेयः प्रतिष्ठाछन्द उच्यते ॥
प्रोक्ता देवी कामकाली शाकिनीबीजमुच्यते ।
रमाकाल्यौ शक्तिकीलौ ज्ञेयौ सप्ताक्षरी मनौ ॥ ॥१७॥
तारपाशाङ्कुशान्दत्वा प्रासादं महतीन्ध्रुवम् ।
अमृ[८० क]तं शाकिनीं रामायोगिनीर्वह्निवल्लभा ॥
उद्धरेद्भार्गवो कामकालीमेकादशाक्षरी ।
ब्रह्मर्षिः शर्वरीछन्दो देव्येषा बीजमंकुशम् ॥
शक्तिकीलौ सुधापाशौ षडंगोमनुरीरितः । ॥१८॥
मेधांकुशौ तथा भूतं शाकिनी डाकिनी तथा ॥
प्रलयश्चाऽपि फेत्कारी फट्त्रयं हृदयं शिरः ।
द्वाभ्यां सहस्रबाहुभ्यां साधितेयं चतुर्द्दशी ॥
प्रोक्तः संमोहनोऽस्यर्षिर्गायत्रं छन्द उच्यते ।
मनोर्द्देवी कामकलाचक्रास्त्रं बीजमुच्यते ॥
विज्ञेयौ दक्षिणाजम्भौ शक्तिकीलौ मनोः प्रिये । ॥१९॥
कामभूतौ भूतकामौ फडन्तौ पृथुराधिता ॥
पञ्चाक्षरी परिज्ञेया कामकाल्या वरानने ।
ऋषिर्म्मनोर्व्वीतिहव्यो जागतं छन्द इत्यपि ॥
देवताकामकाली च नाराचो बीजमुच्यते ।
कुन्तसृष्टी शक्तिकीलौ मन्त्रस्य परिकीर्त्तितौ ॥ ॥२०॥
तारयोर्म्मध्यगौ पाशमेधावादौ प्रयोजयेत् ।
कलातारत्रपाकूर्च्चलक्ष्मीकामास्ततः परम् ॥

काल्याः कराल्याः संबुद्धि विकराल्यास्ततः परं ।
द्वाविंशत्यक्षरीम्विद्यां त्रिफडन्ता समुद्धरेत् ॥
एवंव हि परिज्ञेया हनूमत्समुपासिता ।
ऋषिः सनारदस्यो(तनश्चो?)क्तश्छन्दो ज्ञेयञ्च वार्हतं ॥
देवता कामकाली च काकिनीबीजमिष्यते ।
नागः शक्तिः क्षमा कीलं नासत्यौ तत्वमिष्यते ॥ ॥२१॥

श्रीमहाकाल उवाच ॥

शताक्षरसमुद्धारमथाकर्णय भाविनि ।
येन विज्ञातमात्रेण सर्व्वसिद्धिः करे स्थिता ॥
आदौ त्रपाकामकूर्च्चान्हूम्भल्वान्तान्समुद्धरेत् ।
ततः कामकलेत्युक्त्वा कालिकायै समुद्धरेत् ॥
मेधांकुशरमाका[८० ख]ली योगिनीभीरुशाकिनीः ।
डाकिन्यन्ताः समुद्धृत्य सकचेति पदन्ततः ॥
नरमुण्ड इति प्रोच्य कुण्डलायै इतीरयेत् ।
भोगं सृष्टिं च फेत्कारीं त्रेतां कृत्यां तथोद्धरेत् ॥
महेति विकरालेति वदनायै इतीरयेत् ।
महाप्रलय इत्युक्त्वा समयेत्युद्धरेत्प्रिये ॥
ब्रह्माण्डनिष्पेषणतः करायै इत्यपीरयेत् ।
सान्विष्टिदक्षिणाध्यानचञ्चून् कूर्च्चास्त्रयोस्त्रयं ॥
भयङ्करेति संलिख्य रूपायै तदनन्तरं ।
हारं वैधं कर्णिकां च नालीकं हाकिनीमपि ॥
कौरजानुत्तमाङ्गास्थिभेदिनोस्त्रितयं पुनः ।
संविद्वयं हृच्छिरसी निर्ज्ञेयं शताक्षरी ॥

अस्या ऋषिः समुद्दिष्टो लोमपादो वरानने ।
छन्दो विराट् क्रमोबीजं देवता कामकालिका ॥
शक्तिः सौत्रामणीकूटं नागास्त्रं कीलकंभवेत् ।

देव्युवाच ॥

मन्त्रोद्धाराः सकलाः कामकलाया निशामितास्त्वत्तः ।
अधुना वद शशिशेखर दयितसहस्त्रासा(ना)क्षरोद्धारं ॥

श्रीमहाकाल उवाच ॥

प्रणव नमो भगवत्यै कामकलाकालिकायै च ।
तारत्रपारमास्मररुड्योगिनि योषितां पंच ॥
प्रत्येकं संलेख्यं ततश्च संहारभैरवेत्यपि च ।
सुरतरसलोलुपायै चतुर्द्दशान्तां च पंचकं पश्चात् ॥
आदौ शार्णं बीजं प्रासादं शाकिनीन्तदनु ।
डाकिनिमहाख्यावपि भूतप्रेतामृतान्यपि च ॥
क्षेत्रप्रचण्डी कालीं गारुडकालौ रतिञ्चापि ।
प्रकटविकटानुदशनविकरालवदना ङेन्तैव ॥
घनविद्युद्धनदानां मानसभारुण्डयोश्चापि ।
द्रावणतत्त्वयबीनां प्रत्येकं पञ्च[८१ क]चोद्धृत्य ॥
सृष्टिस्थितिसंहारकारिण्यै इत्यपि ब्रूयात् ।
तदनु मदनातुरायै चामुण्डां चापि कापालं ॥
उग्रं ब्रह्म च शक्तिं चानन्दं रौद्रकं पंच ।
प्रत्येकं संलेख्यं भयंकरेति प्रयोज्यमस्यानु ॥
दंष्ट्रायुगलान्मुखरं रसनायै तदनु च ब्रूयात् ।
कूर्म्मानन्तहयग्रीववदानवक्ष्वेडसुरतपिनीः ॥

तस्य त्रिशक्तिगणपतिकुमारकान् पञ्चशो विलिखेत् ।
सकचनरमुण्डशब्दा डेन्ताकृतकुला चापि ॥
त्रिकूटा सिंहसमाधीःयक्षविरिञ्ची सुदर्शनं चापि ।
गांधर्व्वञ्च निरंजनमेषां वै वारपंञ्चकं लेख्यं ॥
तदनु महाकल्पान्तकान्ब्रह्माण्डचर्व्वणेत्यपि च ।
विलिखेत्ततः करायैं समाधिनादौ च दक्षिणं चक्षुः ॥
स्थाणुं तत्वं तारकगणपाप्सरसां च पञ्चशो विलिखेत् ।
युगभेदभिन्नगुह्याकाल्येकान्मूर्त्तितोऽपि च धरायैं ॥
शाकिनिडाकिनिप्रलेखाः फेत्कारीकर्णिकाहाराः ।
सानुःसमेखलोऽपि च जम्भोभासाल्यकूटश्च ॥
एते च पञ्चकृत्वः क्रमशो लेख्यास्ततो दयिते ।
शतवदनान्तरितैकाद् वदनायैं फट्त्रयं प्रणवः ॥
तुरुतास्मुरु च तारं हिलितारं किलि ततो विलिखेत् ।
ऌः सर्व्वदीर्घयुक्तस्ततोमहाघोररावे च कालि च ॥
कापालि ततो महा च कापालि विकटदंष्ट्रे च ।
शोषिणि संमोहिनितः करालवदने ततो वाच्यं ॥
मदनोन्मादिनिशब्दाज्ज्वालामालिन्यपि ब्रूयात् ।
तदनु शिवारूपि वैं भगमालिनितो भगप्रिये चापि ॥
उद्धृत्य भैरवीति चामुण्डाशब्दतो विलिखेत् ।
योगिन्यादिशतादनुको[८१ ख]टिगणात् परिवृते चापि ॥
प्रत्यक्षं च परोक्षं मां द्विषतो भवति तस्यान्ते ।
युगलं सप्ता(प्त?)विंशस्यास्य वदेत्तदनु देवेशि ॥
जहि नाशयानुनासय मारय उच्चाटयेत्यपि च ।
स्तम्भय विध्वंसय हन त्रुटतो विद्रावय छिन्धि ॥

पच शोषय मोहय चोन्मूलय भस्मीकुरु दहेति ।
क्षोभय हरतः प्रहरात्पातयतो मर्दय दमेति ॥
मथतः स्फोटय जंभय तस्यान्ते भ्रामयेत्यपि च ।
उद्धृत्य सर्व्वभूताद् भयंकरि स्याच्च सर्व्वजनशब्दः ॥
तदनु वशंकरि सर्व्वंवदेच्छत्रुक्षयंकरीत्यपि च ।
प्रणवो व्रीडालारः कामो वदादिकूर्च्चौ च ॥
गायत्रीमुखभूताबागमशीर्षाङ्कुशौ तदनु ज्वलयुग्मं ।
प्रज्वलयुक्क ह हसयुग्मं ततो विलिखेत् ॥
राज्यधनायुः प्रोक्त्वा तदनु सुखैश्वर्य्यमित्यपि च ।
देहिद्वितयं दापययुगलं पश्चात् कृपाकटाक्षं च ॥
मयि च वितरस्वयुगलं योगिन्यबला च शाकिन्यः ।
द्रावणमानसवक्त्रं कापालं चापि भारुण्डा ॥
काली स्मराध्वमनसः कूर्च्चं मुण्डे सुमुण्डे च ।
चामुण्डे इत्युक्त्वा प्रवदेद्वै मुण्डमालिनि पदञ्च ॥
मुण्डावतंसिकेपि च ततश्च मुण्डासने मृतं बीजम् ।
शक्तिर्न्निर्म्मलबीजं तदनु शवारूढ इत्यपि च ॥
षोडशभुजे सोद्यते पाशपदात्परशुनागेति ।
चापानुमुद्गरशिवा पोतानु च खर्पं रानु च नरेति ॥
मुण्डाक्षादपिमात्रा कर्त्तातोनाननाङ्कुशशवेति ।
चक्रत्रिशूलकरवालधारिणि प्रोच्चरेत्पश्चात् ॥
स्फुरयुगलन्तदनुवदेत्प्रस्फुरयुग्मं मम हृदि प्रोच्य ।
तिष्ठद्वितयं[८२ क]निगदेत् स्थिराभवन्त्वन्तममरेशि ॥
सारस्वतागमशिरः कुलिकस्मरभूतबीजानि ।
त्रितयं कौरजपदवीमनोभवां जययुग्मं पश्चात् ॥

विजयद्वितयादस्त्रत्रितयं हृदयं च शीर्षञ्च ।
इत्येषा कथिता तव देवि सहस्राक्षरी शुभदा ॥
कालाग्निरुद्रऋषिरिह्महापरो जागतं छन्दः ।
देवी कामकलापि च कूर्च्चो बीजं स्मरः कीलः ॥
शक्तिर्भूतः शृणिरपि तत्वं सप्ताङ्गको मंत्रः ।

इति श्रीमदादिनाथविरचितायां महाकालसंहितायां कामकलाकाल्या-एकाक्षरमारभ्यसहस्राक्षरीपर्य्यन्तमन्त्रोद्धारकथनन्नामद्विशताधिकत्रिपंचाशत्-पटलः । २५३ पटलः समाप्तः ।

श्रीमहाकाल उवाच ॥

मनोमंत्रं कामकलाकाल्यास्त्वमयुताक्षरं ।
पृष्टवत्यसि मां देवि तं चाहं नारदं त्वयि ॥
किञ्चित्कारणमस्त्यत्र तन्निशामय सादरं ।
नातः परतरः कोऽपि मन्त्र उग्रोऽस्ति भूतले ॥
न चास्य वेत्ता नो जापी न स्मर्त्ता न च साधकः ।
नोद्धर्त्ता नोपदेष्टा च न श्रष्टा न जिघृक्षुकः ॥
षट्स्वाम्नायेषु ये मंत्राः प्रोक्ताः सन्ति वरानने ।
वर्त्तन्ते तेऽखिलाः सर्व्वनद्यम्बून्यर्णवे यथा ॥
उत्पत्तिमयुताक्षर्य्यास्त्वमादौ शृणु सोत्सुका ।
ततः श्रोष्यसि तं मंत्रमुग्रादुग्रतरं प्रिये ॥
अहं नारायणश्चापि कल्पे ऋष्यन्तरा—ये ।
सर्गादौ त्रिपुरघ्नेनास्मद्भक्त्या तोषमीयुषा ॥
त्रैलोक्याकर्षणेनोपदिष्टौ स्यावो वरानने ।
शिक्षयित्वा विधानानि ध्यानपूजादिकानि हि ॥
दत्ताभ्यनुज्ञौ गुरुणा मिथः संमन्त्र्य सत्वरम् ।
संसिषाध[८२ ख]यिषू आवां मंत्रराजं महत्तरं ॥

अगच्छावरह्णो ज्ञात्वा पुष्करद्वीपमुत्तमं ।
प्रत्यक्षां च प्रसन्नां च चिकीर्षूतामहर्निशं ॥
तपावहे तपोघोरं दिव्यानां शरदां शतं ।
ततः प्रसन्ना भगवत्यागत्य पुरतः स्थिता ॥
तां महोग्रतराकारां द्रष्टुमेव न शक्नुवः ।
मीलिताक्षौ नम्रशीर्षावतिष्ठाव क्षणं प्रिये ॥
भीता वा वां परिज्ञायाऽम्बा सौम्यं वपुराददे ।
तत उन्मील्य नेत्राणि पादयोरपतावहि ॥
कराभ्यां सा समुत्थाप्य प्रार्थयेतां युवां वरम् ।
इत्युवाच जगद्धात्री भक्तिप्रवणकंधरौ ॥
आवामवोचाव ततः कृतांजलिपुटौ शिवाम् ।
देवि त्वयैव जगतां स्थितिसंहारकारकौ ॥
कृतावावां त्वत्प्रसादात्प्राप्तयुद्धपराजयौ ।
प्राप्तदेवाधिपत्यौ च स्वेच्छाकर्म्मविहारिणौ ॥
ब्रह्माणं च तृणं मन्यावन्येषाञ्च वरप्रदौ ।
किञ्चिदप्यवशिष्टं नावयोस्त्वत्करुणावशात् ॥
आवयोर्द्दैवता त्वं हि देवेष्वावां च देवताः ।
देवा देवा द्विजातीनां द्विजाः शेषस्य देवताः ॥
वरं दित्सस्यावयोश्च तदेकं देहि नौ वरं ।
मूर्त्तीनां कतिभेदास्ते सौम्योग्राणां महेश्वरि ॥
तान् परिज्ञातुमिच्छावः समन्तान् जगदम्बिके ।
एकस्यां तव मूर्त्तौ चोपासितायां धरेश्वरि ॥
उपासितास्ता भवन्ति चण्डिके तद्वदावयोः ।
श्रुत्वा तदावयोर्व्वाक्यं स्मितं कृत्वावदच्छिवा ॥

श्रीमहाकाल्युवाच ॥

अन्तो न मम मुर्त्तीनां सौम्योग्राणां सुरेश्वरी ।
न च तन्मंत्रभेदानां संख्यास्ति जगतीतले ॥
आगमादिपुराणेषु याः काश्चिच्छिवशक्तयः ।
[८१ क] श्रूयन्ते वाथ दृश्यन्ते मूर्त्तयो हि ममैव ताः ॥
सुरैभ(भं? )वदिदृक्षार्थं तत्रकाञ्चनमूर्त्तयः ।
मयैव निम्मिता देवी सौम्याग्राश्चित्रस्वकल्पया ॥
रक्षोदानवदैत्यानां मारणाय भयानकाः ।
सौम्याः परशिवस्यापि मोहार्थमुपपादिताः ॥
एता मूर्त्यनुकारिण्यः कृताश्चान्या सुमूर्त्तयः ।
सौम्यानां कोटिमूर्त्तीनां सौन्दर्य्यमयताजुषां ॥
यामूर्त्तिर्म्मम विख्याता नाम्ना त्रिपुरसुन्दरी ।
सर्व्वासामेव मध्ये सा विज्ञेया परमावधिः ॥
उग्रावन्ध्यो मूर्त्तयो मे सन्ति कोटचष्टसम्मिताः ।
घोरघोरतराकाराः शक्यन्ते या न वीक्षितुं ॥
चामुण्डा भैरवी भीमा गुह्यकाली च दक्षिणा ।
छिन्नमस्ता चैकजटा कालसंकर्षणी तथा ॥
श्मशानकाली कौरङ्गी भद्रकाली च कुब्जिका ।
उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका ॥
चण्डा चण्डवती चण्डचण्डा चण्डी च चण्डिका ।
बाभ्रवी शिवदूती च कात्यायन्यर्द्धमस्तका ॥
काल्योऽन्याः पञ्चपञ्चाशन्मुख्याः सर्व्वागमेषु याः ।
सतीषु तासु घोरासु मूर्त्तिषु प्रथितासु मे ॥

नहि कामकलाकाली सदृश्युग्रा जगत्त्रये ।
उग्राणां मम मूर्त्तीनामियं हि परमावधिः ॥
सौम्योग्रामूर्त्तयः सन्ति यावत्यो मे सुरेश्वरी ।
तावतीनामपि ध्यानं मन्त्रः पूजा च वर्त्तते ॥
नान्योऽस्ति जगतीमध्ये तासां वेत्ता शिवम्विना ।
अतएव षडाम्नायान् परिज्ञाय चकार सः ॥
तत्तन्मन्त्रध्यानभेदन्यासपूजाविधीनपि ।
प्राक् भवान् स हि सर्व्वज्ञः सर्व्वं विज्ञाय तत्त्वतः ॥
उत्तरोर्द्ध्वाधः प्रतीची पूर्व्वदक्षि(८३ ब)णसंज्ञकाः ।
आम्नायास्तुषडेवैते शिववक्त्रविनिर्ग्गताः ॥
यामला डामरास्तन्त्रसंहितास्तस्य मध्यगाः ।
स्वस्वभक्तिविशेषेण तत्तत्कार्य्यादिसिद्धये ॥
दैवतैर्ऋषिभिः सिद्धैरसुरैर्दैत्यदानवैः ।
गुह्यकैरप्सरोभिश्च किन्नरोरगराक्षसैः ॥
सोमसूर्य्यान्वयोद्भूतैर्भूपालैरितरैर्नरैः ।
दृष्टप्रतीतिभिर्म्मर्त्यैः सा सा मूर्त्तिरुपास्यते ॥
युगशेषे कलौ क्षीणे नरा अल्पायुषोऽलसाः ।
निरुत्साहा दरिद्राश्च भक्तिहीनाः कुमार्ग्गकाः ॥
आसामुपासका नैव भविष्यन्ति विशेषतः ।
ध्यानमंत्रादिकं तासान्तदा लुप्तं भविष्यति ॥
तासां सौम्योग्रमूर्त्तीनां भिन्नाम्नायजुषां सदा ।
एकत्रावस्थितिर्नैव तिमिरालोकयोरिव ॥
उपासितायामेकस्यां कथं ताः समुपासिताः ।
भवेयुरित्यपि महद्दुर्घटं प्रतिभाति मे ॥

मर्म्मको वर्त्तते किंतु महामंत्रोयुताक्षरः ।
षडाम्नायस्थिता मंत्राः प्रायशः सन्ति तत्र हि ॥
सौम्योग्राणां च मूर्त्तीनां भेदो नामानि सन्ति वै ।
एतत्परो न मन्त्रो न मंत्रोस्ति क्वापि त्रिजगतीतले ॥
महामहोग्रोग्रतरः सर्व्वसिद्धयेकसाधकः ।
त्रैलोक्याकर्षणश्चायं तुल्यावेतौ मतौ मम ॥
नदीजलौघा जलधिं यथा सर्वे विशन्ति हि ।
षडाम्नायस्थिताः मंत्रास्तथैवानुविशन्ति तम् ॥
मेरुर्य्यथा पर्व्वतानां गङ्गा च सरितां तथा ।
तीर्थानाञ्च यथा काशी शस्त्राणामशनिर्य्यथा ॥
अश्वमेधोऽध्वराणां च तपस्यानामुपोषणं ।
समीरणो बलवतां कामधेनुर्गवां यथा ॥
शिवो यथा देवतानां देवीनाञ्च यथाप्यहं ।
[८४ क] सर्वेषामेव मंत्राणां तथायमयुताक्षरः ॥
आराधितायामेतेन मंत्रेणैव मयि ध्रुवं ।
सर्व्वा आराधिता हि स्युः षडाम्नायस्य शक्तयः ॥
आरिराधयिषू चेन्मां सौम्योग्रास्तावच्च देवताः ।
कुरुतं यत्नमेतस्मिन् मालामन्त्रेऽयुताक्षरे ॥
प्रविशन्ति यथेभानां पादेऽन्येषां पदानि हि ।
यथेतरेषां हि पदे विशेदिभपदं न च ॥
मन्त्राः सर्व्वे तथामुष्मिन्प्रविशन्ति सुरोत्तमौ ।
नच प्रवेशः क्वाप्यस्य प्रकारैरपि भूरिभिः ॥
बीजकूटोपकूटाश्च यावन्तश्चागमोद्धृताः ।
ते सर्व्वे तत्र तिष्ठन्ति मयि त्रिभुवनं यथा ॥

आम्नायानां यथा षण्णामुपदेशो भवेत्तदा ।
अस्याधिकारी भवति नो चेन्नार्हत्यमुं मनुम् ॥
महिमानममुष्याहं वेद्मि वेद शिवोऽथवा ।
गुरूपदेशाधिगतैस्तन्मन्त्रस्य नरस्य हि ॥
पुरस्तिष्ठामि सततं भवामि वशवर्त्तिनी ।
यथाकर्षन्ति सूत्रेण खगमाराद्विहङ्गमीम् ॥
तथामुनैव मन्त्रेण मामाकर्षन्ति साधकाः ।
एतत्तत्कथितं यत्तद्भवद्भ्यां पृष्टवत्यहं ॥
समासाद्विस्तराद् वक्तुं ममशक्तिर्न्नविद्यते ।

श्रीमहाकाल उवाच ॥

श्रुत्वा देव्या वचः सर्व्वमावाभ्यां पुनरीरितम् ।
यदि देवि प्रसन्नासि तदाह्युपदिश स्वयं ॥
इति विज्ञापिता देवी प्राह (तौ?) सस्मिता(नना?) ।
कृतांजलिपुटौ कृत्वा गदत्यागदतां मनुं ॥
इति देव्या वचः श्रुत्वा तथैवाकरवावहि ।
एवं देव्युपदिश्यावां क्षणादन्तर्द्धिमागता ॥
एवं प्रकारेणावाभ्यां लब्धोऽयमयुताक्षरः ।
अदाद्विष्णुर्न्नारदाय सनकाय च तोषितः ॥
दुर्व्वासाः कश्यपो दत्तात्रेयश्च कपिलस्त[ ८४ब ]था ।
चत्वार एते सच्छिष्या मता मन्त्रस्य पार्व्वति ॥
एतैः शिष्यप्रशिष्याश्च वहवो विहिताः स्वकाः ।
इत्थं परम्पराप्राप्तो ह्यस्मिंल्लोके प्रतिष्ठितः ॥

नाम्ना मृत्युञ्जयप्राणो मालामंत्रोऽयुताक्षरः ।
एवमेतस्य महिमा वर्णितुं केन शक्यते ॥
यत्रैवमवदद्देवी तत्रान्यस्य हि का कथा ।
शांभवाद्याश्च ये कूटास्ताराद्या बीजसंचयाः ॥
सर्व्वे तत्रैव तिष्ठन्ति ब्रह्मणीव जगत्त्रयं ।
यथोर्णनाभिः सूत्राणि वमत्यपि गिलत्यपि ॥
तथैवायं सृजत्यत्ति विश्वं स्थावरजंगमं ।
जन्मकोटिसहस्राणां लक्षेणापि न लभ्यते ॥
विना देवीप्रसादेन तथैवानुग्रहं गुरोः ।
जिघृक्षुरिममध्यायं पठित्वा प्रथमं प्रिये ॥
ततो मृत्युञ्जयप्राणं शनैः स्पष्टमुदीरयेत् ।
समाप्य सकलं मंत्रं प्रणम्य भुवि दण्डवत् ॥
मृत्युंजयप्राणदात्रे सर्व्वस्वं गुरवेऽर्पयेत् ।
अथवा येन संतोषं गुरुर्व्व्रजति तच्चरेत् ॥

इति महाकालसंहितायां प्राणायुताक्षर्य्याः प्रशंसाकथनन्नामद्विशताधिकचतुःपञ्चाशत्तमः पटलः ॥२५४ पटलः समाप्तः ॥

श्रीमहाकाल उवाच ॥

शृणुष्व हिमवत्पुत्रि षष्ठकाल्ययुताक्षरम् ।
यस्य स्मरणमात्रेण सर्व्वसिद्धिः प्रजायते॥
तारवाग्भवमायाश्च लक्ष्मीर्ह्लीस्मर एव च ।
क्रोधश्च योगिनी चैव वधूश्च शाकिनी तथा ॥
अंकुशं च प्रासादश्च क्षौंकारं पाशमेव च ।
स्फ्रोंकारञ्च समुच्चार्य्य वह्निजाया ततो वदेत् ॥

ततः कामकलाकालिमायाकाल्यौ ततो वदेत् ।
मायात्रयं समुच्चार्य क्रोधद्वयं समुच्चरेत् ॥
दक्षिणकालिके चैव क्रोधद्वयन्तथा पुनः ।
भुवनेशी त्र[८५ क]यं चोक्त्वा कालीत्रयं द्विठस्तथा ॥
ततो दक्षिणकालिके वाक्काल्यौ च समाहरेत् ।
त्रपा क्रोधा बला चैव शाकिनीबीजमुद्धरेत् ॥
वधूबीजं योगिनी च स्फ्रेंकारं भद्रकाल्यपि ।
हूं द्वितयं समुच्चार्य्य चास्त्रद्वयं नमः पुनः ॥
वह्निजाया भद्रकालि तारं माये क्रोधौ तथा ।
भगवति ततो प्रोच्य ततः श्मशानकाल्यपि ॥
नरकंकालमालाधारिणि च ततो वदेत् ।
भुवनेशी कालीबीजं कुणपभोजिनि तथा ॥
शाकिनीद्वितयं प्रोच्य ततो वह्निनितम्बिनी ।
श्मशानकालि संप्रोच्य कालीक्रोधौ तथोच्चरेत् ॥
मायावधूरमाकामफट्स्वाहाकालकालि च ।
तारं च शाकिनी चैव सिद्धिकरालि च वदेत् ॥
मायाबीजं समुच्चार्य्य योगिनीबीजमुच्चरेत् ।
क्रोधवधूशाकिन्यश्च हृल्लेखा वह्निवल्लभा ॥
गुह्यकालिसमुच्चार्य्य तारमन्त्रद्वयं चरेत् ।
हूंकारं ह्रींकारञ्चैव फ्रेंकारं छ्रींकारम्पुनः ॥
स्त्रींकारं च रमाबीजमंकुशं हृदयं वदेत् ।
ङेन्ता धनकालिका च विकरालरूपिण्यपि ॥
संबोधनान्ता बोद्धव्या सर्व्वत्रैव सुरेश्वरी ।
धनं चोक्त्वा देहिद्वयं दापयदापयेति च ॥

क्षेत्रपालं तथोच्चार्य इन्द्रस्वरविभूषितं ।
विंदुनादसमायुक्तमंकुशं पाशमेव च ॥
मायाक्रोधहृदां द्वे चास्त्रद्वे वह्निवल्लभा ।
ततो घनकालिके च तारवाग्भवमन्मथाः ॥
लज्जाक्रोधसिद्धिकाल्यै हृदयं सिद्धिकालि च ।
ततो मायां समुच्चार्य्य वदेच्चण्डाट्टहासिनि ॥
ततो जगद्ग्रसनकारिणि तु समुच्चरेत् ।
नरमुण्डमालिनि च प्रवदेत् चण्डकालिके ॥
का[८४ ख]मरमाक्रोधानुक्त्वा शाकिनी त्वंगनापि च ।
योगिनी फट्द्वयं प्रोच्य वह्निस्त्री चण्डकालिके ॥
नमः कमलवासिन्यै स्वाहालक्ष्मि तथोच्चरेत् ।
तारं च लक्ष्मीबीजं च माया च कमला पुनः ॥
कमले च ततश्चोक्त्वा प्रवदेत्कमलालये ।
प्रसीदद्वितयं चोक्त्वा रमा लज्जा रमा पुनः ॥
महालक्ष्म्यै नमः प्रोच्य महालक्ष्मि मायां वदेत् ।
नमो भगवति चोक्त्वा माहेश्वरि ततो वदेत् ॥
अन्नपूर्णे वह्निजाया अन्नपूर्णे तथोच्चरेत् ।
तारमायाक्रोधान् प्रोच्य उत्तिष्ठ पुरुषि वदेत् ॥
किं—पिपिभयं चोक्त्वा ततो मे समुपस्थितं ।
यदि शक्यमशक्यं वा क्रोधदुर्गे ततो वदेत् ॥
भगवति ततश्चोक्त्वा शमय वह्निसुन्दरी ।
क्रोधलज्जातारानुक्त्वा वनदुर्गे मायां वदेत् ॥
स्फुरद्वे प्रस्फुरद्वे च घोरघोरतरेत्यपि ।
तनुरूपे समुच्चार्य्यं च टद्वे प्रचटद्वयं ॥

कह कह रम रम बन्ध बन्ध ततो वदेत् ।
घातयद्वितयं चोक्त्वा क्रोधमस्त्रं ततः स्मरेत् ॥
ततश्च विजयाघोरे माया पद्मावति वदेत् ।
वह्निजायां ततः स्मृत्वा ततः पद्मावति स्मरेत् ॥
महिषमर्द्दिनि स्वाहा महिषमर्द्दिनि स्मरेत् ।
तारं चोक्त्वा दुर्गे द्वयं रक्षिणि वह्निकामिनि ॥
जय दुर्गे समुच्चार्य तारमाये समुच्चरेत् ।
दुं दुर्गायै स्वाहा चोक्त्वा वाङ्मायाविष्णुवल्लभाः ॥
तारं नमो भगवति मातंगेश्वरि संस्मरेत् ।
सर्व्वस्त्रीपुरुषेत्युक्त्वा वशङ्करि ततो वदेत् ॥
सर्व्वदुष्टमृगेत्युक्त्वा वशंकरि ततो वदेत् ।
सर्व्वग्रहवशंकरि सर्व्वसत्ववशंकरि ॥
सर्व्वजनमनोहरि सर्व्वमुखरंजिनि च ।
सर्वराजवशंकरि ततः स्मरेच्च साधकः ॥
सर्व्वलोकममुं वशमानय ततो वदेत् ।
वह्नि [८६ क] स्त्री च तथा राजमातंगि साधकोत्तमः ॥
तथोच्छिष्टमातंगिनि चान्ते क्रोधवीजं स्मरेत् ।
एवं मायां ततस्तारं ततो मन्मथमेव च ॥
वह्निजायोच्छिष्टेत्युक्त्वा मातंगि समुदाहरेत् ।
तथोच्छिष्टचाण्डालिनि सुमुखि देवि संवदेत् ॥
महापिशाचिनि मायास्त्रिठं द्विविन्दुकं स्मरेत् ।
तथोच्छिष्टचाण्डालिनि तारञ्च समुदाहरेत् ॥
महासेनो धरासंस्थो वामनेत्रविभूषितः ।
विन्दुनादसमायुक्तो वगलामुखि चोद्धरेत् ॥

सर्व्वेत्युक्त्वा च दुष्टानां मुखं वाचं समीरयेत् ।
ततश्च स्तम्भय जिह्वां कीलयद्वितयं वदेत् ॥
बुद्धिं नाशय संस्मृत्य पूर्व्ववीजं ततः स्मरेत् ।
तारपूर्व्वा वह्निजाया वगले वाग्भवं वदेत् ॥
रमामायास्मरान् स्मृत्वा धनलक्ष्मि वदेत्ततः ।
तारलज्जावाग्भवाश्च मायां तारं स्मरेत्ततः ॥
सरस्वत्यै नमः स्मृत्वा सरस्वति वदेत्ततः ।
पाशं मायां क्रोधं चोक्त्वा भुवनेश्वरि चेत्यपि ॥
तारत्रपाविष्णुजायाक्रोधकामपाशास्ततः ।
तथा चाश्वरूढायै च फट्द्वयं वह्निवल्लभा ॥
अश्वारूढे समाभाष्य तारवाग्भवलज्जकाः ।
नित्यक्लिन्ने मदद्रवे वाङ्माया वह्निसुन्दरी ॥
नित्यक्लिन्ने समाभाष्य सुन्दरीवीजमुद्धरेत् ।
ततश्च भैरवीकूटं बालाकूटं ततः स्मरेत् ॥
वगलाकूटमुच्चार्य्य त्वरिताकूटमुद्धरेत् ।
जय भैरवि संप्रोच्य रमात्रपावाग्भवं स्मरेत् ॥
क्लूंकारं च ततश्चोक्त्वा चन्द्रश्च सविसर्गकः ।
अकारञ्च आकारञ्च इकारं संस्मरेत्ततः ॥
विन्दुनादसमायुक्तं वाचयेत्सा[८६ ब]धकोत्तमः ।
राजदेवी राजलक्ष्मी क्रमशस्तु ततः स्मरेत् ॥
चतुर्द्दशस्वरोपेतविन्दुद्वयविभूषितः ।
चन्द्रवीजं समुच्चार्य्य स्वर्णकूटं समाहरेत् ॥
वाङ्मायाकाममातृश्च राजराजेश्वरि ततः ।
ज्वल ज्वल समाभाष्य शूलिनि दुष्टग्रहं वै ॥

प्रम स्वाहा समुच्चार्य्य शूलिनि च वदेत्सुधीः ।
मायामहाचण्डयोगेश्वरि श्रींकारमुद्धरेत् ॥
दान्तलान्तौ वह्निसंस्थौ तुरीयस्वरभूषितौ ।
नादबिंदुसमायुक्तौ ततोऽस्त्रपंचकं स्मरेत् ॥
जय महाचण्डयोगेश्वरि विष्णुनितम्बिनी ।
त्रपाकामत्रिपुटे च वाङ्मायानङ्गमातरः ॥
क्षींकारं क्लींकारं चैव सिद्धिलक्ष्म्यं नमस्ततः ।
काममाता भुवनेशी वाग्भवश्च स्मरेत्ततः ॥
राज्यसिद्धिलक्ष्मि चोक्त्वा ॐकारं शम्भुवल्लभा ।
क्रोधपाशौ क्रोंकारं च स्त्रींकारं क्रोधमुच्चरेत् ॥
क्षींकारं ह्लांकारं चैव फट्कारं त्वरितं स्मरेत् ।
नक्षत्रकूटमुच्चार्य्यं चन्द्रकूटं ततः स्मरेत् ॥
ततो ग्रहकूटं चैव तदन्ते च दिवाकरं ।
काम्यकूटं ततोऽपि स्यात्ततः कालकूटं चरेत् ॥
तदुत्तरं पार्व्वकूटं कामकूटं तदुत्तरम् ।
ततः पश्चात् धराकूटं वारुणं तदनन्तरं ॥
चक्रकूटं समाभाष्य पद्मकूटमनन्तरं ।
शंखवराहकूटौ दर्शनान्मुक्तिदायकौ ॥
ततः स्मरेन्नृसिंहकूटं सर्व्वफलप्रदम् ।
इन्द्रकूटं समाराध्य इन्द्रलोके महीयते ॥
मत्स्यकूटं ततोऽपि स्यात्ततो ज्ञेयं त्रिशूलकम् ।
शक्तिकूटं तथोच्चार्य्यं शिवलोके वसेद्ध्रुवं ॥
वैष्णवकूटं तथा ज्ञेयं केवलं विष्णुरूपिणम् ।
त्रपालज्जाक्रोधकामयो[८७ क]पितो वाग्भवं तथा ॥

गारुडं योगिनीञ्चैव शाकिनीं कालिकां चरेत् ।
ततो धराकूटं ज्ञेयं क्रोधबीजं ततश्चरेत् ॥
ततोऽघोरे सिद्धिं मे वै देहि दापय संस्मरेत् ।
वह्निजाया अघोरे च ॐकारं नम इत्यपि ॥
चामुण्डे च तथोच्चार्य्य करङ्किणि वदेत्ततः ।
करङ्कमालाधारिणि च किं किं विलम्बसे ततः ॥
भगवति ततश्चोक्त्वा शुष्कानन ततः स्मरेत् ।
खद्वयं च ततः प्रोच्य चान्त्रकरावनेति च ॥
भो भो वला इति प्रोच्य—वल्गेति वदेत्ततः ।
कृष्णभुजंगवेष्टिततनुलम्बकपाले वै ॥
ह्लष्ट ह्लष्ट इति प्रोच्य हट्ट हट्ट तदन्तरम् ।
पत पत समुच्चार्य्य पताका च ततो वदेत् ॥
हस्ते ज्वल ज्वल प्रोच्य ज्वालामुखि ततो वदेत् ।
अनलनखखट्वाङ्गधारिणि च तथोच्चरेत् ॥
हा हा चट्ट चट्ट इति हुं हुं अट्टाट्टहासिनि ।
उड्ड उड्ड ततोऽपि स्याद्वेरेतालमुखि इति ॥
अकि अकि स्फुलिङ्गेति पिङ्गलाक्षि ततोऽपि च ।
चल चल चालयेति चालयेति तथोच्चरेत् ॥
करङ्कमालिनि प्रोच्य नमोऽस्तुते स्वाहा ततः ।
विश्वलक्ष्मि ततश्चोक्त्वा तारमाये समुच्चरेत् ॥
क्षेत्रपालो वह्निसंस्थो चतुर्थस्वरमस्तकः ।
नादविन्दुसमायुक्तो वीजं समुच्चरेत् सुधीः ॥
दादिरेवं समुच्चार्य्य रान्तश्चैवं समाहरेत् ।
एवं शान्तः समाहार्य्यः कालीक्रोधो पुनर्वदेत् ॥

अस्त्रं यन्त्रप्रमथिनि रुफ्रैंकारं च ततः स्मरेत् ।
ततो धरां समाहृत्य बीजं शृणु मनोहरम् ॥
रैश्चैव जकारश्च तदन्तश्च क्रमाल्लिखेत् ।
वह्निरुढं बीजं ज्ञेयं तुरी[८० ब]यस्वरपूजितं ॥
नादबिन्दुशिरोबीजमुच्चरेद्बीजमुत्तमं ।
तारत्रयं समाभाष्य फैंकारं समुदीरितं ॥
चण्डयोगेश्वरि कालि शाकिनी हृदयन्तथा ।
चण्डयोगेश्वरि लज्जाक्रोधास्त्राणि विनिर्दिशेत ॥
महाचण्डभैरवि च भुवनेशीं वदेत्ततः ।
क्रोधास्त्रं वह्निजायां च महाचण्डभैरवी वैं ॥
वाग्भुवनेश्वरी कामशाकिनी वाग्भवानपि ।
लज्जा रमा तथा चैव उद्धरेत्कोविदो जनः ॥
त्रैलोक्यविजया ङेन्ता हृदये वह्निवल्लभा ।
त्रैलोक्यविजये चैव वाग्लज्जालक्ष्मीमन्मथाः ॥
प्रासादं जय लक्ष्मि च युद्धे मे विजयं वदेत् ।
देहि चेत्युच्य प्रासादं पाशमङ्कुशफट्त्रयम् ॥
वह्निस्त्री जयलक्ष्मि च अतिचण्डं तथोच्चरेत् ।
तथा महाप्रचण्डेति भैरवि च ततः स्मरेत् ॥
क्रोधचण्डं समाभाष्य अतिचण्डटकारकौ ।
योगबीजं समाभाष्य फटं स्मरेत्ततोऽपि च ॥
विलिखेच्च ततो याम्यकूटं परमसिद्धिदम् ।
फान्तफस्थो वह्निसंस्थस्ततश्च ठादिमुच्चरेत् ॥
तदन्ते च महाकूटमीशसंज्ञं समुच्चरेत् ।
रेफमुच्चार्य्य वीरेन्द्र फटं स्मरेत्तदन्तरम् ॥

महामन्त्रेश्वरि चैव तारत्रपारमास्मरान् ।
प्रासादक्रोधौ वज्रञ्च वदेत्प्रस्ताविनि द्विठम् ।।
वज्रप्रस्तारिणि चोक्त्वा तारं ह्रीं हृदयं वदेत् ।
परमभीषणे चोक्त्वा क्रोधद्वयं क्रमाल्लिखेत् ।।
करकङ्कालमालिनि चोक्त्वा वै शाकिनीद्वयम् ।
कात्यायनि व्याघ्रचर्म्मावृतकटि वदेदिति ।।
कालीद्वयं समुच्चार्य्य श्मशानचारिणि वदेत् ।
नृत्य नृत्य गाय गाय हस हस क्रोधद्वयं ।।
क्रार[ ८८क ]णादीनि संलेख्य चांकुशद्वितयमपि ।
शववाहिनि संलेख्य मां रक्ष रक्ष चेत्यपि ।।
अस्त्रद्वयं क्रोधद्वयं हृल्लेखा वह्निकामिनी ।
कात्यायनीत्विति प्रोच्य वाङ्माया हरिसुन्दरी ।।
शान्तः षान्तश्च पान्तश्च यान्तो भगविभूषितः ।
नादबिन्दुस्व(स्व?)लंकृत्य वदेद्बीजमनुत्तमम् ।।
बिन्दुहीनं प्रेतबीजं शान्तं पाशसमन्वितम् ।
बिन्दुनादभूषितन्तु वदेद्बीजं तदुत्तरं ।।
भान्तं बिन्दुयुतं चैव तुरीयस्वरभूषितं ।
दादिं बिन्दुयुतं स्मृत्वा वामकर्णविभूषितं ।।
नकुलीशो वह्निसंस्थो पाशबिन्दुसमन्वितः ।
बीजं स्मृत्वा तथा मायां तथादीर्घतनुच्छदं ।।
योगिनीकूटमुच्चार्य्य फेत्कारी कूटमुच्चरेत् ।
शिवशक्तिसमरसचण्डकापालेश्वरि ततः ।।
क्रोधं हृदयमुच्चार्य्य चण्ड वदेत्तदन्तरं ।
कापालेश्वरि चोच्चार्य्यं वाक्कालीमारमातरः ।।

ततश्च खेचरीकूटं कूटानां कूटमुत्तमं ।
सुवर्णद्वितयं प्रोच्य महासुवर्ण इत्यपि ॥
कूटेश्वरि समाभाष्य व्यूहकूटं ततः स्मरेत् ।
रमा त्रपा वाग्भवश्च हृल्लेखा वह्निसुन्दरी ॥
स्वर्णकूटेश्वरि प्रोच्य वाग् लज्जा कृष्णभार्य्यका ।
पाशमुच्चार्य्य देवेशि ब्रह्मणस्तृतीयं वदेत् ॥
बिन्दुयुक्तं धरासंस्थं वामकर्णसमन्वितम् ।
बीजमेतत्समुच्चार्य्य ईंकारं पाशमेव च ॥
ततो नादं समुच्चार्य्य हृल्लेखाभगवति वदेत् ।
वार्त्तालि द्वितयं प्रोच्य वाराहि द्वितयं वदेत् ॥
वराहमुखि तथैवोक्त्वा ऐंकारं ग्लूंकारस्तथा ।
अन्धे अन्धिनि हृदयं रुन्धे रुन्धिनि सञ्चरेत् ॥
हृल्लेखाजम्भे [८८ ख] जाम्भिनि च हृदयं मोहे मोहिनि स्मरेत् ।
नमःस्तम्भे स्तम्भिनि च नमःसर्व्वदुष्ट(ष्टे?)वेत्यपि ॥
प्रदुष्टानां ततश्चोक्त्वा सर्व्वेषां सर्व्ववाक्चित्त ।
चक्षुःश्रोत्रमुखगतिजिह्वास्तम्भं कुरुद्वयं ॥
शीघ्रं वशं कुरु कुरु शीघ्रं वशं कुरुद्वयम् ।
वाग्भवं कालीबीजञ्च श्रीबीजं तदनन्तरं ॥
ठपंचकं समाभाष्य तारहेतुं क्रोधमुच्चरेत् ।
अस्त्रं द्विठं वार्त्तालि च भवेद्द्वादशिकामपि ॥
ग्लुं ह्रीं बीजं समुच्चार्य्यं वार्त्तालि वाराहि वदेत् ।
ह्रीं ग्लुं तावनुस्मृत्य द्वादशिकं बीजं ॥
चण्डवार्त्तालि संप्रोच्य वाङ्मायाविष्णुवल्लभाः ।
आंकारं ग्लूंकारं चैव ईंकारं वार्त्तालिद्वयम् ॥

वाराहिद्वितयं प्रोच्य शत्रून् दह दहेति च ।
ग्रस ग्रसेति संलेख्य चतुर्थबीजमुच्चरेत् ॥
तत आञ्च ततो ग्लुं च ततो हूञ्च फटन्तथा ।
जय वार्त्तालि संभाष्य वाङ्माग हरिवल्लभा ॥
महाबीजं समुच्चार्य्य प्रेतबीजं समुच्चरेत् ।
तारमायाक्रोधांश्चैव शाकिनीबीजमुच्चरेत् ॥
राज्यप्रदे समाभाष्य हकारबीजमुच्चरेत् ।
फेत्कारीबीजमुच्चार्य्य उग्रचण्डे स्मरेत्पुनः ॥
रणमर्द्दिनि संभाष्य क्रोधं च शाकिनीं वदेत् ।
योगिनीञ्च वधूबीजं सदेति रक्ष रक्ष च ॥
त्वं रूपं मां रूपं च जूं सं सर्गान्तमेव च ।
मृत्युहरे नमः प्रोच्य वह्निजायां द्विबिन्दुकम् ॥
स्मरेदुग्रचण्डे चैव वाग्भवं······पुनः ।
योगिनीकूटमुच्चार्य्य फेत्कारीकूटमुद्धरेत् ॥
वामनेत्रयुतं बीजं भजतां कामदं महत् ।
तारमाया ह्स फ्रं क्रोधं च शाकिनीं चरेत् ॥
उग्र च[८९ क]ण्डे समाभाष्य बीजं चण्डेश्वरं ततः ।
महाप्रेतं समाभाष्य वह्नेर्भार्यां लिखेत्ततः ॥
श्मशानोग्रचण्डे इत्युक्त्वा वाग्भवपञ्चकं वदेत् ।
ततश्च फेत्कारीकूटं वामनेत्रयुतं स्मरेत् ॥
अमृताख्यं ततः स्मृत्वा डाकिनीं वामनेत्रिकां ।
फेत्कारीं च ततो देवि वामनेत्रविभूषितां ॥
रुद्रचण्डा चतुर्थ्यन्ता सानुहृद्वह्निवल्लभा ।
सम्बुद्धयन्ता रुद्रचण्डा वाग्भवपञ्चकं पुनः ॥

फेत्कारीकूटं ततो देवि वामनेत्रविभूषितम् ।
चण्डकूटे समाभाष्य डाकिनी बीजमुद्धरेत् ॥
धराकूटं समाभाष्य तुरीयस्वरभूषितं ।
प्रचण्डायै ततश्चोक्त्वा हृदयं वह्निवल्लभा ॥
प्रचण्डे वाग्भवं पंचफेत्कारीं मायया युता ।
सन्धिकूटं ततश्चोक्त्वा ङेन्ता हि चण्डनायिका ॥
ग्रूंकारं च समुच्चार्य्य नमःस्वाहे ततः परं ।
ततश्चण्डनायिके च वाग्भवपञ्चकं ततः ॥
तथैव फेत्कारीकूटं कूटं च ब्रह्मनिर्म्मितं ।
चण्डेश्वरं ततो देवि वामाक्षि विन्दुसंयुतम् ॥
महाप्रेतं समुच्चार्य क्लीं हृद्वह्निर्वह्निवल्लभा ।
चण्डे चोक्त्वा महादेवि वाग्भवपञ्चकं वदेत् ॥
फेत्कारीकूटं तथेशानि नादं वामाक्षि संयुतम् ।
चण्डवत्यै ततश्चोक्त्वा क्ष्म्लूं कारं हृदयं तथा ॥
स्वाहाचण्डवति चोक्त्वा वाग्भवपञ्चकं पुनः ।
फेत्कारीकूटं तथा देवि वायुकूटं ततो वदेत् ॥
डाकिनीं च ततो देवि वामनेत्रविभूषितां ।
अतिप्रेतं समाराध्य चातिचण्डां महेश्वरि ॥
चतुर्थ्यन्तां च हृदयममृतं बीजमुद्धरेत् ।
नमःस्वाहे चातिचण्डे वाग्भवपञ्चकं चरेत् ॥
फेत्कारीकूटं [८६ ख] देवेशि श्मशानकूटकं पुनः ।
डाकिनीं च समाभाष्य वामनेत्रविभूषितां ॥
महाप्रेतं तथोच्चार्य चण्डिकायै स्मरेत्ततः ।
रौद्रबीजं समुच्चार्य्य नमःस्वाहे ततः परं ॥

चण्डिके च तथोच्चार्य्य वाग्भवपंचकं पुनः ।
फेत्कारीकूटं चोच्चार्य्यं स्फ्रींकारं तदनन्तरं ॥
कामक्रोधौ—कारञ्च ब्ल्हींकारं तदनन्तरं ।
कात्यायन्यै स्फ्रेंकारं च कामदायिन्यै ततः परं ॥
हुंकारञ्च नमःस्वाहे ज्वालाकात्यायनि ततः ।
वाग्भवान् पञ्च संलिख्य कामक्रोधौ रमा ततः ॥
द्रावणं च समुच्चार्य्यं महिषमर्दिनि ततः ।
श्रींकारं चैव देवेशि वाग्भवाः पञ्च एव च ॥
उन्मत्तमहिषमर्द्दिनि च ततः परं ।
ततोवाग्भवान्पंच नक्षत्रकूटं संलिखेत् ॥
शंखकूटं ततश्चोक्त्वा महामहेश्वरि वदेत् ।
ततश्च तुम्बुरेश्वरि वह्निजाया ततः परं ॥
तुम्बुरेश्वरि ततश्चोक्त्वा तारत्रयं ततः परं ।
कामक्रोधामृतांश्चैव पाशं वाग्भवमेव च ॥
क्रोधप्रेतौ शाकिनी च चैतन्यभैरवि तथा ।
शाकिनी च प्रेतांकुशौ पाशवागमृतक्रोधाः ॥
काममाये तारास्त्रे च द्विठश्चैतन्यभैरवि ।
वाग्भवाः पञ्च च तदा तदा मुण्डमधुमती ॥
चतुर्थ्यन्ता समुच्चार्य्या तथैव शक्तिभूतिनी ।
ततो मायात्रयञ्चोक्त्वा फट्कारं मधुमत्यऽपि ॥
सम्बुद्ध्यन्ता समुच्चार्य्या वद वद ततः परम् ।
वाग्वादिनि प्रेतबीजं बिन्दुनादसमन्वितं ॥
विसर्गहीनं चोच्चार्य्यं क्लिन्नक्लेदिनि ततः परम् ।
महाक्षोभं कुरु तदा प्रेतबीजमतः परम् ॥

वाग्वादिनी भैरवि च माया च शाकिनी तथा ।
स्फेंकारञ्च समुच्चार्य्य [६० क] कामबीजं ततः परं ॥
पूर्णेश्वरि सर्व्वकामान् पूरयानुतारं लिखेत् ।
अस्त्रं स्वाहा पूर्णेश्वरि सम्बोध्यन्ता ततः परं ॥
वाग्भवपंचकं चैव रक्तरक्ते ततो लिखेत् ।
महारक्तचामुण्डेश्वरि चैव ततः परं ॥
अवतरद्वयं चैव वह्निपत्नी तदा प्रिये ।
ततो रक्तचामुण्डेश्वरि संलिख्य माहेशि ॥
तारत्रपा रमा त्रिपुरा वागीश्वरी तथा ।
ङेन्ता नमः समुच्चार्य्य पुरा वागीश्वरि तथा ॥
हसौं बीजं तदा देवि कूटं मारं ततः परं ।
महाप्रेतं ततः कालभैरवि च ततः परम् ॥
निशाकूटकूर्च्चकूटौ तुङ्गप्रतुङ्गकूटकौ ।
चण्डवारुणि संप्रोच्य तारमघोरे च तदा ॥
पाशयुक्तं हकारञ्च घोरे तदनुवदेत् ।
त्रपाघोरघोरतरे दीर्घं तनुच्छदं ततः ॥
सर्व्वतः शर्व्वशर्व्वे च हूँकारं च ततः प्रिये ।
नमस्ते रुद्ररूपे च हविसर्गौ ततः शृणु ॥
प्रणवञ्च तथा घोरे त्रपालक्ष्म्यङ्कुशा अपि ।
कामाङ्गना वाग्भवाश्च गारुडं योगिनीप्रिये ॥
शाकिनी च कालीबीजं फेत्कारी तदनन्तरं ।
क्रोधबीजं अघोरे च सिद्धिं मे देहि दापय ॥
वह्निजायान्ततो दद्याद्धनदानुघोरे वदेत् ।
तारमाये शाकिनी च क्रोधबीजं च पार्व्वति ॥

महादिग्वीरतदा वाग्भमास्मरपाशकाः ।
मुक्तकेशि चण्डाट्टहासिनि योगिनी तथा ॥
वधूकाल्यमृतान्युक्त्वा मुण्डमालिनि संवदेत् ।
ततस्तारं वह्निजायां दिगम्बरि च तारकम् ॥
वाक्त्रपाकामकमलाकालेश्वरि ततो हरेत् ।
सर्व्वमुखस्तम्भिनि च सर्व्वजनमनोहरि ॥
सर्व्वजनवशंकरि सर्व्वदुष्टनिर्मर्द्दिनि ।
सर्व्वस्त्रीपुरुषा[ ६०ख ]कर्षिणि छिन्दि शृंखलां ततः ॥
त्रोटयद्वितयं प्रोच्य सर्व्वशत्रून् वदेत् प्रिये ।
जम्भयद्वितयं चोक्त्वा द्विषां निर्द्दलयद्वयं ॥
सर्व्वान् स्तम्भय द्वितयं मोहनास्त्रेण द्वेषिणः ।
उच्चाटयद्वयं प्रोक्त्वा सर्व्ववश्यं कुरुद्वयं ॥
वह्निपत्नी देहि युगं ततः सर्व्वं स्मरेत्प्रिये ।
कालरात्र्यै कामिन्यै च गणेश्वर्य्यै नमस्तदा ॥
कालरात्रि ततश्चोक्त्वा तारवाग्भवपाशकाः ।
ततः कलारामकलां सविन्दुं शृणु पार्व्वति ॥
एह्येहि भगवति ततः किरातेश्वरि ततः परम् ।
विपिनकुसुमावतंसिनिकर्णे ततः प्रिये ॥
भुजगनिर्म्मोचककञ्चुकिनि मायाद्वयं ततः ।
सविन्दुकं हृद्वयञ्च कहद्वयं ज्वलद्वयं ॥
प्रज्वलद्वितयं देवि सर्व्वसिद्धिं ददद्वयं ।
देहिद्वयं दापय च सर्व्वशत्रून्दहद्वयम् ॥
बन्धद्वयं पठद्वयं मथद्वयं महेश्वरि ।
विध्वंसयद्वयं प्रोच्य कवचत्रितयं ततः ॥

अस्त्रहृद्वह्निभार्य्या च किरातेश्वरि संवदेत् ।
वाग्भवपञ्च च तथा वज्रकुब्जिके ततः स्मरेत् ॥
प्रलयबीजं प्राणेशि त्रैलोक्याकर्षिणि ततः ।
त्रपाकामांगद्राविणि स्मराङ्कणे ततोऽनघे ॥
महाक्षोभकारिणी ततो वाग्भवो मीनकेतनः ।
द्विबिन्दुकश्चन्द्रबीजश्चतुर्द्दशस्वरान्वितः ॥
द्विबिन्दुकं पुनश्चन्द्रं ततोवज्रकुब्जिके च ।
नमो भगवति तदा ततो घोरे महेश्वरि ॥
भोगबीजं ततो देवि श्रीकुब्जिके ततः परम् ।
सानुबीजं सकारञ्च जीवारूढं रेफान्वितं ॥
कलया भूषितं ज्ञेयं तदुत्तरं श्रृणु प्रिये ।
बीजन्तत्परमेशानि वामकर्णविभूषि[ ६१क ]तं ॥
ङ ञ ण न म उच्चार्य अघोरामुखि तत्परं ।
ह्रकारं बिन्दुसहितं आद्यदीर्घत्रयान्वितं ॥
क्रमेण त्रीणि बीजानि संलिख्य प्राणवल्लभे ।
किलिद्वयं ततो विच्चे पादुकां पूजयाम्यपि ॥
नमः समयकुब्जिके तारमैथत्रपास्मराः ।
शाकिनी प्रलयञ्चैव फेत्कारीतदनन्तरं ॥
भावाख्यकूटं ततो देवि चतुर्थस्वरभूषितं ।
षष्ठस्वरविहीनञ्च भगवति वदेत्ततः ॥
विच्चे घोरे ततोऽपिस्यात्फेत्कारी वाग्भवान्विता ।
श्रीकुब्जिके ततः पश्चात्सानुबीजन्ततः परं ॥
तदेव षष्ठस्वरेण समुद्धरेन्महेश्वरि ।
प्रेतबीजं विसर्गहीनं ङ न ण नम इत्यपि ॥

अघोरामुखि तदा छस्य वीजत्रयन्तथा ।
किलिकिलि ततो विच्चे कामिनी क्रोध एव च ॥
प्रेतवीजं पादुकां च पूजयामि नमः स्वाहा ।
मोक्षकुब्जिके ततोपि स्यान्नमो भगवति तथा ॥
सिद्धे तदा महेशानि प्रलयत्रयमुद्धरेत् ।
दीर्घाद्यत्रयसंयुक्तं कुब्जिके तदनन्तरं ॥
सानुत्रयंतथादेवि दीर्घ—विभूषितं ।
खगे ततो वाग्भवश्च अघोरे तदनन्तरम् ॥
अघोरामुखि ततः किलि द्वयं तथोद्धरेत् ।
विच्चे पादुकां चोक्त्वैव पूजयामि नमस्ततः ॥
भोगकुब्जिके तथैव मेघत्रयारमास्तथा ।
फेत्कारी च जीवधान्तौ वह्न्याख्ढौ तारान्वितौ ॥
भगवत्यम्ब ततः कूटं प्राभातिकन्ततः ।
पुनस्तदेवकूटं स्यात्सकाराद्यञ्च चिन्तयेत् ॥
कुब्जिकायै तथोच्चार्य्यं नकुलीशसकारकौ ।
ब्रह्मेन्द्रगौरी च तदा विन्दुञ्च कलयान्वितम् ॥
जीवश्चन्द्रश्च ब्रह्मा च [६१ख] एकादशस्वरस्तथा ।
गौरीवीजं परे दत्वा षष्ठस्वरविभूषितं ॥
ततो ङञणनमेति अघोरामुखि संलिखेत् ।
पूर्ववत्त्रीणि वीजानि छकारस्य समुद्धरेत् ॥
किलि किलि ततो विच्चे मानुधान्तौ रेफारूढौ ।
तारान्वितौ फेत्कारी च रमा माया मेघा अपि ॥
ततो जय कुब्जिके हि मेघमायारमास्तथा ।
ततः साद्यप्रलयञ्च प्रेतं विसर्गहीनकं ॥

बिन्दुयुक्तं ततः पश्चाद् भगवत्यम्ब इत्यपि ।
ततः प्राभातिकं कूटं साद्यंन तद्द्वितीयकं ॥
वामकर्णविहीनं कलया मण्डितं प्रिये ।
कुब्जिके च ततश्चोक्त्वा बालाकूटं ततः परम् ॥
तत्कूटं च द्वयं लेख्य तुरीयषष्ठभूषितम् ।
ततो ङञणनम अघोरामुखि संवदेत् ॥
छां छीं किलि किलि ततो विच्चेऽस्त्रंवह्निवल्लभा ।
क्रोधास्त्रं वह्निपत्नी च हृदाकृतितयन्ततः ॥
ततः सिद्धिकुब्जिके मेघमायारमा अपि ।
प्रलयप्रेतबीजं ततो देविकूटं वाराहिकं ततः ॥
साद्यं तदेव कूटं स्याद्वितीयं परमेश्वरि ।
रेफस्याः सह पान्ताश्च कलाबिन्दुसमन्विताः ॥
षष्ठस्वरविहीनं तु कलाबीजेन भूषितं ।
एतद्बीजं समाभाष्य कुब्जिके तदनन्तरम् ॥
मायाद्वयमागच्छद्वयं तत्र विचिन्तयेत् ।
आवेशयद्वयंप्रोच्य वेधयद्वयमाहरेत् ॥
मायाद्वयं तथैवोक्त्वा द्वितीयं च वाराहिकं ।
संलिख्य द्वितीयं कूटं मूलवाराहिकं ततः ॥
नमःस्वाहे तथा चोक्त्वा आवेशकुब्जिके ततः ।
माहेन्द्राख्यं ततः कूटं फेत्कारीबीजमुद्धरेत् ॥
पित्सकूटं ततोभद्रे मार्ज्जाराख्यन्ततः प्रिये ।
मणिकूटमृषिकूटं कूटंसारङ्गकं ततः ॥
[६२ क] वाग्भवपञ्चकन्ततः कालि कालि ततः परं ।
महाकालि मांस इति शोणितभोजिनि ततः ॥

ह्रां ह्रीं ह्रूं रक्तकृष्णमुखि समुद्धरेत्ततः ।
देवि मा मां पश्यन्त्विति शवव इति संवदेत् ॥
श्रीहृदयशिवदूति श्रीपादुकां ततः परम् ।
पूजयामि क्रांकारं च हृदयाय नमस्ततः ॥
हृदयशिवशिवदूति च मेघपञ्चकमुद्धरेत् ।
नमोभगवति तदा दुष्टचाण्डालिनि ततः ॥
रुधिरमांसभक्षिणि कपालखट्वांग तथा ।
ततः पश्चाद्धारिणि च हनयुग्मं वदेत्ततः ॥
दहयुग्मं पचयुग्मं मम शत्रून् प्रसद्वयम् ।
मारयद्वितयं प्रोच्य क्रोधत्रयं ततः प्रिये ॥
फट्शिरः शिवदूतीति श्रीपादुकां पूजयामि ।
ह्रींशिरसे ततः स्वाहा शिरः शिवदूति ततः ॥
वाग्भवपञ्चकं ततः प्रलयत्रयमाहरेत् ।
आद्यदीर्घत्रयं कृत्वा महापिंगल ततः ॥
जटाभारे विकटरसनाकराले संवदेत् ।
सर्व्वसिद्धिं देहि देहि दापयद्वितयंवदेत् ॥
शिखाशिवदूति ततः श्रीपादुकां पूजयामि ।
दीर्घतनुच्छदं ततः शिखायै च वषट् ततः ॥
शिखाशिवदूति ततो वाग्भवपञ्चकं ततः ।
महाश्मशानवासिनि घोराट्टहासिनि ततः ॥
विकटतुङ्गकोको(का?)मुखि मायास्मरौ तथा ।
हरिजायामहापातालतुलितोदरि संवदेत् ॥
भूतवेतालसहचारिणि संलिख्य चानघे ।
कवचशिवदूति च श्रीपादुकां ततः स्मरेत् ॥

पूजयामि कवचाय क्रोधबीजं स्मरेत्ततः ।
कवचशिवदूति हि मैघानां पञ्च एव च ॥
लेलिहान [६२ ब] रसना तु भयानके वदेत्ततः ।
विस्रस्तचिकुरभारभासुरे संवदेत् प्रिये ॥
चामुण्डा भैरवी ततो डाकिनी गण चेत्यपि ।
परिवृते शाकिनी च डाकिनी क्रोध एव च ॥
आगच्छ द्वितयं प्रोच्य सान्निध्यं कल्पयद्वयम् ।
त्रैलोक्यडामरे तथा महापिशाचिनि ततः ॥
नेत्रशिवदूति तदा श्रीपादुकां तथा प्रिये ।
पूजयामि नेत्रत्रपाय वौषट् नेत्र इत्यपि ॥
शिवदूति समाभाष्य वाग्भवपञ्चकं ततः ।
गुह्यातिगुह्यकुब्जिके त्रिक्रोधमस्त्रमेव च ॥
मम सर्व्वोपद्रवान् मन्त्रतंत्र ईपि तदा ।
यन्त्रचूर्णप्रयोगादिकान् परिकृतान् तदा ॥
करिष्यन्ति तान् सर्वान् हनयुग्मं तथोत्तरम् ।
मथयुग्मं मर्दययुगं युगलं परिकीर्तितम् ॥
दंष्ट्राकरालि शाकिनी च क्रोधास्त्रे च ततः परम् ।
गुह्यातिगुह्यकुब्जिके ततोऽस्त्रशिवदूति च ॥
श्रीपादुकां पूजयामि अस्त्राय फट् तदन्तरम् ।
अस्त्रशिवदूति ततो वाग्भवपञ्चकं तथा ॥
क्रोधानां पञ्च आहूत्य कारघोरनादेति च ।
विद्राविद्राविजजगत्त्रये ततोमायात्रयं हरेत् ॥
प्रसारितायुतभुजे महावेगप्रधाविते ।
स्मरत्रयं पदविन्यासत्रासितइति स्मरन् ॥

सकलं पाताले रमात्रयं ततो वदेत् ।
व्यापकशिवदूति च ततो वदेज्जितेन्द्रिय ॥
परमशिवपर्यङ्कशायिनि तदनन्तरम् ।
ततः क्रमेण देवेशि योगिनीत्रयमुद्धरेत् ॥
गलद्रुधिरमुण्डमालाधारिणि संवदेत् ।
घोरघोरतररूपिणि संवदेत्ततः ॥
ततः परं शाकिन्यास्तु क्रमेण त्रयमाहरेत् ।
[६३ क] ज्वालामालि—ङ्गजटाजूटे वदेच्च साधकः ॥
अचिन्त्यमहिमबलप्रभावे तदनन्तरम् ।
कामिनीत्रयमुद्धृत्य दैत्यदानव इत्यपि ॥
निकृन्तनि ततोऽपिस्यात् शृणुष्व परमेश्वरि ।
सकलसुरासुरकार्यसाधिके तदनन्तरम् ॥
त्रितारं फट् नमः स्वाहा व्यापकशिवदूति ततः ।
तारत्रपारमाकामवाग्भवाङ्कुशलज्जकाः ॥
पाशक्रोधौ महापुरुषप्रासादौ तदनन्तरम् ।
अमृतङ्गारुडञ्चैव फेत्कारी तदनन्तरम् ॥
चण्डहयग्रीवो ततो योगिनी शाकिनी तथा ।
मेघोवियद्रतिञ्चैव प्रेत स्फॉकारमेव च ॥
खेचर्य्यनेहसौ चैव भौजंगमस्तथापरः ।
कालसंकर्षिणि तदा क्रोधौ च वह्निवल्लभा ॥
कालसंकर्षिणि पुनर्म्मेघमायारमास्मराः ।
फेत्कारी क्रोधो तदनु कुक्कुटि क्रौंकारं तदा ॥
पाशाङ्कुशौ शाकिनी च चण्डबीजं ततः परम् ।
अस्त्रद्वयं वह्निजाया कुक्कुटि तदनुस्मरेत् ॥

तारं माया ततः कामः कामिनी शाकिनी तथा ।
भ्रमराम्बिके तदनु शत्रुमर्दिनि संवदेत् ॥
पाशाङ्कुशप्रासादाश्च क्रोधश्च योगिनी तथा ।
अस्त्रद्वयं हृदयं च वह्नयङ्गना तारा तथा ॥
भ्रमराम्बिके तदनु चण्डबीजं ततः स्मरेत् ।
धनदे भुवनेशी च सां सीं सूं तदनन्तरम् ॥
ततश्च संकटादेवि संकटेभ्यो मां तथा ।
तारद्वयं रमाकामौ प्रासादौ क्रोध एव च ॥
पाशास्त्रे चवह्नचवला संकटादेवि तत्परम् ।
पाशाङ्कुशप्रासादाश्च भोगवति ततः परम् ॥
तारमाये समुच्चार्य वादिक्षान्तं समुद्धरेत् ।
बिन्दुनादसमायुक्तं नव[६३ ख]बीजं क्रमेण हि ॥
क्रोधश्च हृदयं चैव भगवति वदेत्ततः ।
महार्णवेश्वरि ततस्त्रैलोक्यग्रसनेति च ॥
शीने पाशं कलाबीजं वामकर्णं सबिन्दुकं ।
अस्त्रं च वह्निपत्नी च महार्णवेश्वरि ततः ॥
तारबीजं क्षींकारञ्च पींकारं चूंकारं तदा ।
ततो भगवति ततो जान्तः षष्ठस्वरान्वितः ॥
बिन्दुयुक्तो महेशानि कूटं प्राभातिकन्ततः ।
ततो वाराहिकं कूटं सर्व्वतन्त्रसुगोपितं ॥
चण्डत्र्यंकारकापालिनि जय ऊंकेश्वरि नमः ।
द्विठोजय ऊंकेश्वरि तारमायापाशास्तथा ॥
ङेन्ता च शबरेश्वरी नमश्च शबरेश्वरि ।
प्रणवं मेघपाशौच त्रपारमास्मरास्ततः ॥

क्रोधश्च शाकिनीवीजं डाकिनी फेत्कारी तथा ।
पिङ्गले पिङ्गले ततो महापिङ्गले ततः परं ॥
कालीवीजं क्रोधवीजं शाकिनी योगिनी तथा ।
प्रेतकाल्यावङ्कुशं च शाकिनी कामिनी तथा ॥
रमाचण्डानेहसाञ्च विद्युत्पन्नगद्विठाः पुनः ।
सिद्धिलक्ष्मि ततस्तारं वाक्त्रपाश्रीस्मरा अपि ॥
भगवति महा तदा मोहिनि तदन्तरम् ।
ब्रह्मविष्णुशिवादिसकलेति वदेत्ततः ॥
सुरासुरमोहिनि सकलं प्रवदेत्ततः ।
जनं मोहय मोहय वशीकुरुद्वयं वदेत् ॥
कामाङ्गद्राविणि ततः कामांकुशे ततः परं ।
त्रिकामिनी कामरमे त्रपा मेधं तारं तथा ॥
महामोहिनि तदनु वाक्स्मरौ कुलिका तथा ।
ततो बाले हकारं च सकलाश्चस्वरूपकाः ॥
माया वीजं समुद्धार्य्य हसकहलह्रींन्ततः ।
सकलह्रीं तदनु त्रिपुरसुन्दरि ततः ॥
कुं नमो मुकाम्बिकायै वादिनो मूकयद्वयं ।
पाशवीजं का [६४क] मवीजं मायावीजं ततः परं ॥
विन्दुविसर्गसहितं रुद्रस्वरविहीनकम् ।
तत्ववीजं आदित्यश्च शक्रस्वरविभूषितं ॥
वह्नयङ्गना च तदनु मुकाम्बिके ततः प्रिये ।
माया च नाकुलं चैव क्रोधास्त्रे तदनन्तरम् ॥
एकजटे ततः पश्चात् त्रपानाकुलक्रोधकाः ।
नीलसरस्वति ततस्तारत्रपा ततः परं ॥

नाकुलेश्यै च तदनु फट्कारन्तदनंतरम् ।
उग्रतारे च तदनु ताररमामायास्तथा ॥
मैधं वज्रवैरोचनीये ईर्ष्याद्वयं ततः परं ।
अस्त्रद्विठे छिन्नमस्ते तारं हृदयमेव च ॥
भगवत्यै पीताम्बरायै त्रपे सुमुखि ततः ।
बगले विश्वं मे वशंकुरु कुरु तथा ॥
द्विठोवश्यबगले च हुंक्षेक्ष तदनन्तरं ।
त्रिकंटकि तदनु च ताराङ्कुशस्मरा अपि ॥
कमला हरपत्नी च पाशं जायाक्रोधन्तथा ।
जयदुर्गे तदनु च रक्ष रक्ष स्वाहा ततः ॥
संग्रामजयदुर्गे च त्रपास्मररुपस्तथा ।
विजयप्रदे तदनु प्रणवं पाशमेव च ॥
प्रासादामृतगारुडाः पन्नगास्त्रे ततः परं ।
ब्रह्माणि तारप्रासादौ ग्लुं आं ह्रीं तदनन्तरं ॥
रमेश्यै च ततोऽपिस्यान्माहेश्वरि वदेत्ततः ।
भुजङ्गविद्युज्जलदाः शाकिनीरतिकालिकाः ॥
चण्डकाली ग्लुंकारं च प्रेतं क्रोधं तथैव च ।
क्रोधमस्त्रद्वयं ततो वह्निजाया ततः परं ॥
माहेश्वरि तदनु त्रपावाणीस्मरास्तथा ।
तारं कौमारि तदनु मयूरवाहिनि ततः ॥
शक्तिहस्ते ततः क्रोधं शाकिनी तदनन्तरम् ।
वधूबीजमस्त्रद्वयं वह्निजाया ततः परम् ॥
कौमारि तत्परस्तारस्नमो नारायण्यै ततः ।
जगत्स्थितिकारिण्यै त्रिकामस्त्रिरमा त[८४ ख]तः ॥

पाशकालद्विठानुक्त्वा वैष्णवि प्रणवं ततः ।
हृदयं भगवत्यैं वराहरुपिण्यैं ततः परं ॥
चतुर्द्दशभुवनाधिपायै भूपतित्वम्बदेत्ततः ।
मे देहि दापय स्वाहा वाराहि तदनु प्रिये ॥
तारपाशांकुशक्रोधकालमायास्मरस्त्रियः ।
महाक्रोधः क्षेत्रपाली चण्डकालौ च शाकिनी ॥
जिह्वासटाघोररूपे दंष्ट्राकराले ततः स्मृतं ।
नारसिंहि त्रिश्रावादं ततः क्रोधत्रयं भवेत् ॥
अस्त्रद्वयं वह्निजाया नारसिंहि ततोप्यनु ।
तारमाररमाक्रोधा इन्द्राणि तदनन्तरम् ॥
मायायुग्मं जयद्वन्द्वन्क्षेत्रपालिद्वयं तत. ।
अस्त्रद्वयं वह्निजाया इन्द्राणि तदनन्तरम् ॥
प्रणवांकुशकालपश्च शाकिनी चण्ड एव च ।
योगिनी खेचरी चैव असूया फेत्कारी तथा ॥
विद्युत्कालौ रतिश्चैव मायासर्पमहारुषः ।
गारुडं च ततो वीजं चामुण्डे तदनन्तरम् ॥
ज्वलयुग्मं हिलियुग्मं किलियुग्मं ततः परम् ।
मम शत्रूस्ततश्चोक्त्वा त्रासयद्वन्द्वमेव च ॥
मारययुगलं ततो हन पच द्वयं द्वयं ।
भक्षययुगलन्ततः कालीयुग्मं ततो हरेत् ॥
मायाद्वन्द्वं क्रोधद्वन्द्वमस्त्रद्वन्द्वं द्विठस्ततः ।
चामुण्डे तारहृदये कामेश्वरि पदन्ततः ॥
कामाङ्कुशे कामप्रदायिके भगवति ततः ।
नीलपताके भगातिके पदद्वयं महेश्वरि ॥

रतिहृन्मंत्रोस्तु ते ततः परमान्ते गुहचे तदा ।
ईर्ष्यात्रियं मदने हि मदनान्तदेहे तदा ॥
त्रैलोक्यमावेशयेति च क्रोधास्त्रे वह्निवल्लभा ।
नीलपताके ततः पश्चात् कालीद्वयन्ततः प्रिये ॥
चत्वारः क्रोधास्तदनु चाङ्कुशानां त्रयन्तदा ।
रमायुग्मं त्रपायुग्मं योगिनी शा[६५ क]कि(नी?)तदा ॥
कामिनीचण्डघण्टे च शत्रून् स्तम्भय स्तम्भय ।
मारय मारय तदा क्रोधास्त्रे वह्निवल्लभा ॥
चण्डघण्टे ततः शत्रून् स्तम्भयद्वितयं हरेत् ।
मारयद्वितयं क्रोधमस्त्रस्वाहे तथोच्चरेत् ॥
चण्डघण्टे तारमायारमाक्रोधांकुशास्तथा ।
काली च कामिनी चैव मन्मथस्तदनन्तरम् ॥
ततश्च शांभवं कूटमुमाकूटं ततः परम् ।
शंभुकूटं ततः पश्चात्तरापरञ्च कूटकं ॥
सर्प्पकूटं ततः पश्चात्चण्डेश्वरि ततः परम् ।
खेचरी योगिनी चैव शाकिनी गारुडन्तदा ॥
क्रोधद्वन्द्वमस्त्रद्वन्द्वं स्वाहा चण्डेश्वरि ततः ।
तारमेवपाशमायाक्रोधांकुशा अपि प्रिये ॥
क्षेत्रपाली च काली च गारुडं शाकिनी तथा ।
अनङ्गमाले ततः स्त्रियमाकर्षयद्वयन्ततः ॥
त्रुटयुग्मं छेदययुग्मं क्रोधयुग्मं स्मरेत्ततः ।
अस्त्रं युग्मम्वह्निजायाऽनङ्गमाले ततः परं ॥
तारवाग्भवमायाश्च रमा स्मरश्च कालिका ।
पाशाङ्कुशौ चण्डक्रोधौ महासूया च फेत्कारी ॥

शाकिनीहरसिद्धे च सर्व्वसिद्धिं कुरुद्वयम् ।
देहिद्वन्द्वं दापय च युग्मं क्रोधत्रयन्ततः ॥
अस्त्रद्वयं वह्निजायाहरसिद्धे ततः परं ।
प्रणवाङ्कुशगारुडाः फेत्कारी क्रोधमेव च ॥
योगिनी फेत्कारी सम्बुद्धयन्ता ततः परं ।
ददयुग्मं देहि दापय स्वाहा ततः परं ॥
फेत्कार्य्याः पूर्व्वरूपञ्च वाग्रमापाशमेव च ।
प्रासादक्रोधौ तदनुभूलं प्रेतं तथैव च ॥
शाकिनी योगिनी चैव कामिनी मानसन्तथा ।
परिभारुण्डकापाला सिद्धेस्तारन्तथैव च ॥
लवणेश्वरि तदनु हराङ्गना च योगिनी ।
क्रोधस्त्रीशाकि[ ६५ ख ]नी चैव नाकुलि तदनुस्मरेत् ॥
तारमेवपाशक्रोधा मायारमाक्रोधस्मराः ।
कालबीजं च तदनु मृत्युहारिणि तत्परम् ॥
तारवाग्भवमायाश्च क्रोधश्च हृदयं तथा ।
भगवति रुद्रवाराहि रुद्रतुण्डप्रहारे च ॥
जयबीजयुगन्देव्याः सिद्धयुग्मं ततः परम् ।
सर्व्वोत्पातान् प्रशमय प्रशमय तथा परं ॥
हरेः पुत्रस्ततो जाया योगिनीस्त्री च शाकिनी ।
हृदयं वह्निजाया च वज्रवाराहि ततः परं ॥
तारमाये क्षेत्रपाली अंकुशं हुं त्रयं तथा ।
हयग्रीवेश्वरि ततश्चतुर्व्वेदमयि तदा ॥
शाकिनी योगिनी चैव कामिनी क्रोधमेव च ।
सर्व्वविद्यानामप्यधिष्ठानं कुरुद्वयं ततः स्वाहा ॥

हयग्रीवेश्वरि ततो वेदाद्या वाग्भवस्तथा ।
पाशं माया तत्त्ववीजं एहीनं च द्विविन्दुकम् ।।
परमहंसेश्वरि तदा कैवल्यं साश्रय स्वाहा ।
परमहंसेश्वरि पुनस्तारं माया रमात्रयं ।।
स्मरयुग्मं निर्व्विकारस्थचिदानन्दघनेति च ।
रूपायै मोक्षलक्ष्म्यै च अमितानन्त इत्यपि ।।
शक्तितत्वायै तदनु स्मरयुग्मं रमात्रयम् ।
मायातारौ मोक्षलक्ष्मि तारकाख्यौ नमस्ततः ।।
ङेन्ता ब्रह्मवादिनी च काली तारन्नमस्तथा ।
वह्निजाया मायावीजं कामक्रोधौ च शाकिनी ।।
शातकर्णि महाघोररूपिणि तारमेव च ।
कमलायोगिनीरामाः फट्द्वन्द्वं वह्निसुन्दरी ।।
शातकर्णि ततस्तारे ज्वलयुग्मन्ततः परं ।
प्रज्वलद्वितयन्ततो महेश्वरि शृणुष्व मे ।।
सर्व्वमुखरूपे तदा जातवेदसि तदनन्तरम् ।
ब्रह्मास्त्रेण नाशयेति सचराचरं ततः परम् ।।
जगत्स्वाहा तदनु जातवे[२६ क]दसि ततः परं ।
तारपाशवाग्भवाश्चाङ्कुशकालीरमास्तथा ।।
कामक्रोधौ शाकिनी च महानीले ततः परं ।
प्रलयाटोपघोरेति नादघर्घरे वदेत्ततः ।।
आत्मानमुपशमय जूं सः स्वाहा ततः परम् ।
महानीले ततस्तारं कामसिद्धस्मरास्ततः ।।
ततो नु ब्रह्मविद्ये च जगद्ग्रसनशीले तु ।
महाविद्ये ततो माया क्रोधं ह्रां च ततः परं ।।

विष्णुमाये समाभाष्य क्षोभयद्वितयं हरेत् ।
कामांकुशपाशास्त्वापि निरंजनं ततः शिवे ॥
सर्व्वास्त्राणि ग्रस ग्रस हुं फट् तारं तथैव च ।
निरंजनं समाभाष्य बगलामुखि ततः परं ॥
सर्व्वशत्रून् स्तम्भय स्तम्भयेति लिखेत्परं ।
तथाब्रह्मशिरसे ब्रह्मास्त्रायेति संस्मरेत् ॥
क्रोधकामनिरंजनास्तारं हृद्वह्निसुन्दरी ।
विष्णुमाये तदनु च तारं ह्रीं शाकिनी तथा ॥
डाकिनी च रमाबीजं कामक्रोधौ च योगिनी ।
कामिनी च गुह्येश्वरि महागुह्येति संवदेत् ॥
विद्यासंप्रदायबोधिके पाशाङ्कुशामृतान्यपि ।
अस्त्रं कृष्णलोहिततनूदरि प्रासादमेव च ॥
अश्मा चैव मनोस्त्रं च हृदयं द्विठमेव च ।
गुह्येश्वरि ततश्चैव तारं हृदयमेव च ॥
श्वेतपुण्डरीकासेनायै प्रतिसमरेति च ।
विजयप्रदायै भगवत्यै अपराजितायै ततः परम् ॥
हरपत्नी हरिपत्नी हरिपुत्रस्ततः परम् ।
फट्कारञ्च वह्निनारी प्रणवञ्चापराजिते ॥
सम्बोध्यन्ते च प्रणवं माया हं बीजमुत्तमम् ।
अश्वा चैव महाविद्ये मोहय विश्वकर्म्मकम् ॥
वाग्रमाकामबीजञ्च त्रैलोक्यमावेशयेति च ।
क्रोधमस्त्रद्वयञ्चोक्त्वा महाविद्ये [६६ ख] ततः परं ॥
वाग्भवः प्रेतबीजं च डाकिनी तदनन्तरं ।
मनःकूटं समाभाष्य एह्येहि भगवति ततः ॥

वाभ्रवि तदनुस्मृत्य महाप्रलय चेत्यपि ।
ताण्डवकारिणि तदा गगनग्रासिनि ततः ॥
रमाक्रोधौ योगिनी च कामिनी शाकिनी तथा ।
शत्रून् हन हन चेति सर्व्वैश्वर्य्यं ददः द्वयं ॥
महोत्पातान् विध्वंसय विध्वंसयेति चाहरन् ।
सर्व्वरोगान्नाशय नाशयेति ततः परं ॥
वेदमस्तककमलाकामप्रासादपाशकाः ।
महाकृत्याभिचारग्रहदोषान्निवारय ॥
निवारय मथ द्वन्द्वमंकुशं कालमेव च ।
अमृतं प्रलयञ्चैव फेत्कारी तदनन्तरं ॥
वह्निभञ्जना वाभ्रवि च तारमायारमास्तथा ।
क्रोधं भगवति ततो महाडामरि तत्परं ॥
डमरुहस्ते तदनु नीलपीतमुखि ततः ।
जीवद्ब्रह्मगलनिष्पेषिणि ततो हरेत्सुधीः ॥
योगिनी कामिनी चैव शाकिनी डाकिनी तथा ।
महाश्मशानरङ्गचर्च्चरीगायिके ततः ॥
तुरुयुग्मं मर्द्दयुग्मं मर्दययुगमेव च ।
फेत्कारी वह्निजाया च डामरि तदनु स्मरेत् ॥
तारमाया शाकिनी च वेतालमुखि तत्परम् ।
चर्च्चिके तदनु क्रोधं योगिनी कामिनी तथा ॥
ज्वालामालि ततः पश्चाद्विस्फुलिङ्गरमणि हि ।
महाकापालिनि तदा कात्यायनि ततः परं ॥
रमास्मरौ डाकिनी च कहयुग्मं धमद्वयम् ।
ग्रसद्वंद्वं ततः पाशाङ्कुशौ प्रासादमेव च ॥

नरमांसरुधिरपरिपूरितकपाले च ।
पीयूषघनशक्तीनां क्रमेण बीजमाहरेत् ॥
असूयात्रितयं चाऽ[६७ क]स्त्रद्वयं चानलभाविनी ।
चण्डिके तदनु मायाद्वयं महामंगले ततः ॥
महामंगलदायिनि अभये भयहारिणि ।
वह्निस्त्री च ततः पश्चादभये तदनन्तरं ॥
तारवाग्भवचामुण्डाः प्रासादं प्रेतमेव च ।
उत्तानपादे तदनु एकवीरे ततः परं ॥
हसयुग्मं गाययुग्मं नृत्ययुगलमेव च ।
रक्षद्वयं महाक्रोधचण्डकालास्तथैव च ॥
सर्प्पबीजं रतिबीजं पाशघण्टामुण्डेत्यपि ।
खट्वांगधारिणि ततोऽस्त्रद्वयं हृदयं द्विठः ॥
एकवीरे ततः पश्चात्तारत्रपाक्रोधास्तथा ।
वाणीरमामारपाशाङ्कुशप्रासादास्तदनन्तरं ॥
भगवति महाघोरकरालिनि ततः परं ।
तामसि महाप्रलयताण्डविनि ततः परं ॥
झर्झरीकरतालिके ततो जयद्वयं स्मरेत् ।
जननि तदनु स्मृत्वा जम्भजम्भ ततः परं ॥
महाकालि तदनु च कालनाशिनि ततः परं ।
भ्रामरि भ्रामरि ततो डमरुभ्रामिणि तथा ॥
भैधस्मरी तथा भूतं योगिनी कामिनी ततः ।
शाकिनी डाकिनी चैव प्रलयः फेत्कारी तथा ॥
ततोऽस्त्रं हृदयञ्चैव वैश्वानराङ्गना ततः ।
तामसि तदनु स्मृत्वा तारवाण्यौ ततः परं ॥

समरविजयेत्युक्त्वा दायिनि तदनन्तरम् ।
मत्तमातङ्गेति ततो यायिनि तदनन्तरं ॥
रमाबीजं पाशबीजं हरपत्नी ततः परं ।
भगवति ततः पश्चाज्जयन्ति तदनन्तरं ॥
समरे जयं तदनु देहि देहि ततः परं ।
मम शत्रून्विध्वंसय विध्वंसयेति तत्परं ॥
विद्रावययुगं तदा भंजद्वयं तथापरं ।
मर्द्दययुगलं ततस्तुरुयुग्मं [६७ ब] तथा वदेत् ॥
हुर्व्यङ्गनाहरिसुतौ कामिनी तदनन्तरं ।
हृदयं बह्निजाया च जयन्ति तदनन्तरं ॥
ताररमापाशाङ्कुशस्मरक्रोधास्ततः परं ।
धनदा च समाधिश्च एकानंशे ततः परं ॥
डमरु डामरि नीलाम्बरे नीलविभूषणे ।
नीलनागासने ततः सकलसुरासुरानिति ॥
वशेकुरु कुरु तदा जम्यिके कम्यिके ततः ।
सिद्धिदे बृद्धिदे ततो योगिनी कामिनी तथा ॥
क्रोधस्मरौ शाकिनी च प्रासादं फट्कारस्ततः ।
बह्निजाया ततः पश्चादेकानंशे ततः परं ॥
वाग्भवं ब्रह्मवादिन्यं ब्रह्मरूपिण्यं द्विठस्तथा ।
तदन्ते ब्रह्मरूपिणि तारत्रपारमास्मराः ॥
असूया भगवति तथा नीललोहितेश्वरि ततः ।
त्रिभुवनं रंजय रंजय सकलेति च ॥
सुरासुरानाकर्षयाकर्षय हृदयन्तदा ।
बह्निजाया नीललोहितेश्वरि ततः परम् ॥

वाणी तस्याः सपत्नी च त्रिकालवेदिन्यै ततः ।
वह्निजाया तदन्ते च त्रिकालवेदिनि ततः ॥
वेदशिरश्च कमला भुवनेशी स्मरस्तथा ।
कामिनी शाकिनी चैव क्रोधमस्त्रन्ततः परं ॥
ब्रह्मवेतालराक्षसि कालो महासूया तथा ।
चण्डो विष्णुशवावतंसिके ततः परं ॥
योगिनी प्रेतवीजञ्च पीयूषन्तदनन्तरं ।
महारुद्रकुणपारूढ़े मेघपाशौ ततः शृणु ॥
प्रासादमस्त्रत्रितयं हृदयं वह्निवल्लभा ।
कोरंगि तारवाग्वीच रमा ह्रौं स्मर एव च ॥
प्रासादक्रोधपाशाश्च योगिनी कामिनी ततः ।
क्रोधश्च शाकिनी चैव काली मेघस्तथापरं ॥
वह्निजाया रक्तदन्ति हरपत्नी स्मरस्तथा ।
असू[६८ क]या शाकिनी चैव डाकिनी प्रलयस्तथा ॥
फेत्कारी कर्णिका चैव हारः सानुस्तथैव च ।
दृष्टिरस्त्रं वह्निजाया भूतभैरवि ततः परम् ॥
वाणी रमा पाशकला हृदयन्तदनन्तरम् ।
ततः पश्चात् षडाम्नायं परिपालिन्यै ततो वदेत् ॥
शोषिण्यै द्राविण्यै ततो नामक्यै भ्रामक्यै ततः ।
जूं वीजं क्लुं वीजं चैवमादित्यमोकारयुक्तकः ॥
कुलकोटिन्यै ततः काकासनायै शाकिनी ततः ।
अस्त्रं द्विठः कुलकुट्टिनि ततस्तारं स्मरस्तथा ॥
पीयूषं भुवनेशी च कामिनी क्रोध एव च ।
शाकिनी योगिनी चैव ततश्चण्डं शृणु प्रिये ॥

कामाख्यायै फट्कारं च शिरः कामाख्ये ततः परम् ।
मैथपाशी प्रासादश्च प्रेताङ्कुशकाला अपि ॥
चतुरशीतिकोटिमूर्त्तये तदनन्तरम् ।
विश्वरूपायै ब्रह्माण्डजठरायै तारन्ततः ॥
स्वाहाविश्वरूपे पाशकले वामकर्णस्ततः परं ।
ऐं औं क्षेमंकर्य्यै ततो द्विठः क्षेमंकरि ततः ॥
वाण्यागमशिरोमायाकन्दर्पस्तदनन्तरं ।
निगमागमबोधिते सद्योधनपदन्ततः ॥
भगवति कुलेश्वरि ततः क्रोधास्त्रद्विठकाः ।
कुलेश्वरि वाग्भवश्च कामबीजं ततः परं ॥
ततो जगदुन्मादिन्यै ङेन्ताकामांकुशास्ततः ।
विश्वविद्राविणी ङेन्ता स्त्रीपुरुषमोहिनी च ॥
चतुर्थ्यन्तां समाभाष्य मायाक्रोधावलास्तथा ।
वह्निस्त्रो च ततः पश्चात्कामांकुशे पदन्ततः ॥
तारञ्च हृदयञ्चैव सर्व्वधर्मध्वजान्ततः ।
ङेन्तामुच्चार्य्य ततः सकलसमयाचारेत्यपि ॥
बोधितायै ततः क्रोधमावेशिन्यै [६८ ख] ततः परं ।
अस्त्रस्वाहे ततः पश्चादावेशिनि पदं ततः ॥
तारत्रपारमाकामयोगिनीकामिनी तथा ।
डाकिनी क्रोधमस्त्रञ्च करालिनि पदन्ततः ॥
मायूरिशिखिपिञ्छिकाहस्ते सद्यो धनं पदं ।
खेचरी मेघनाङ्गना अक्षकर्णि पदन्ततः ॥
जालंधरि पदमाभाष्य मा मां द्विषन्तु शत्रवः ।
नन्दयन्तु भूपतयो भयं मोचय ततः परं ॥

क्रोधास्त्रे वह्निजाया च मायूरिपदमेव च ।
तारमेंधामृताङ्कुशा इन्द्राक्षि तदनन्तरं ॥
क्रोधास्त्रत्रयमाभाष्य वह्निजाया ततः परं ।
इन्द्राक्षिपदमाभाष्य काल्यंकुशौ ततः परं ॥
हयग्रीवस्ततः सिद्धो मायाचण्डस्ततः घोणकि ।
घोणकमुखि तुभ्यं नमः स्वाहा ततः ॥
घोणकिवाक्त्रपापदमाक्रोधकामास्त्र शाकिनी ।
योगिनी शाकिनी चैव फेत्कारी तदनन्तरं ॥
भीमादेवि भीमनादे भीमकरालि ततः परं ।
महाप्रलयचण्डलक्ष्मीः सिद्धेश्वरि ततः परं ॥
जीवहीनं पराकूटं बृहत्कूटमतः परं ।
राथन्तरं ततः कूटं महाघोरेति संवदेत् ॥
घोरतरे भगवति भयहारिणि तत्परं ।
मां द्विषतो विभाष्यैव निर्म्मूलययुगं वदेत् ॥
विद्रावययुगं चोक्त्वा उत्सादययुगं ततः ।
ततो महाराज्यलक्ष्मीं वितरयद्वयं हरेत् ॥
देहियुग्मं दापययुगं डाकिनी प्रलयस्तथा ।
अमृतप्रेतप्रासादा.................ततः परं ॥
क्रोधक्षेत्रपदस्त्राश्च प्रासादस्तत एव च ।
जययुग्मं राक्षसक्षयकारिणि वदेत्ततः ॥
तारत्रपाक्रोधास्तदा त्रिटा[६६ क]न्तं त्र्यक्त्रमेव च ।
हृच्छिरसी तदनु भीमादेवी तथापरम् ॥
तारवाणीरमामायाक्रोधशाकिन्य एव च ।
डाकिनी प्रलयश्चैव फेत्कारी फेंकारं तथा ॥

प्रविश संसारं तदनु महामाये ततः परं ।
फें फडिति समाभाष्य ब्रह्मशिरोनिकृन्तिनि ॥
विष्णुतनुनिर्द्दलिनि जे जंभिके ततः परं ।
स्तें स्तम्भिके छिन्दियुगं भिन्दि दह युगं युगं ॥
मथयुग्मं पचयुग्मं पञ्चशवारूढे ततः ।
पंचागमप्रिये ततोऽमृतं दन्तञ्च खेचरी ॥
रमा कामस्तथा संविः पञ्चपाशुपतेत्यपि ।
अस्त्रधारिणि संप्रोच्य क्रोधत्रितयमेव च ॥
अस्त्रद्वयं वह्निजाया ब्रह्मनिकृन्तनि ततः ।
वाक्यांशवेदशिरसस्ततो हृदयमेव च ॥
परशिवविपरीताचारकारिणि ततः परम् ।
ह्रीरमाकामयोगिनीकामिन्यस्तत एव हि ॥
महाघोरविकरालिनि खण्डार्द्धशिरोधारिणि ।
ततोऽपि भगवत्युग्रे शाकिनी डाकिनी तदा ॥
प्रलयफेत्कार्यौं च कूटं प्राभातिकं ततः ।
वाराह्निकं ततः कूटं क्रोधास्त्रे वह्निवल्लभा ॥
भुवनेशी ततः क्रोधमर्द्धमस्तके ततः परं ।
काली क्रोधञ्च तारञ्च क्रोधं च शाकिनी कामिनी तदा ॥
चण्डबीजन्ततश्चण्डखेचरि ज्वलयुग्मकं ।
प्रज्वलद्वितयञ्चैव निर्म्मांसदेहे नमः ॥
द्विठञ्चण्डखेचरि हि वेदादिर्न्नम एव च ।
प्रचण्डघोरदावानलवासिन्यैं ततः परम् ॥
ह्रीं हं समयविद्या कुलतत्त्वधारिणी च ।
डेन्ता ज्ञेया ततः पश्चान्महामांसरुधिरप्रिया ॥

चतुर्थ्यन्ता समाजेया यो[६६ ख]गिनी बीजमेव च ।
कामिनी कामबीजं च धूमावत्यं ततः परं ॥
सर्व्वज्ञाता सिद्धिदायं शाकिन्यस्त्रं शिरस्तथा ।
ततो धूमावति पश्चाद्वाक्त्रपा पाशमेव च ॥
ह्रां सौः क्लीं महाभोगिराजभूषणे ततः परं ।
सृष्टिस्थितिप्रलयकारिणि तदनन्तरम् ॥
हुं हुंकारनादभूरिदारिणि भगवति ततः ।
हाटकेश्वरि ततः पश्चादमृतं तदनन्तरं ॥
दस्रानन्दो रौद्रबीजं रमावाग्भवचण्डकाः ।
शाकिनी डाकिनी चैव मम शत्रूनिति स्मरेत् ॥
मारय बंधय द्वौ द्वौ मर्द्दययुगलन्तथा ।
पातययुगलं चैव ततः पश्चान्महेश्वरि ॥
धनधान्यायुरारोग्यैश्वर्य्यन्ततो देहिद्वयं ।
दापययुगलं चैव मानसं तदनन्तरं ॥
परिकापालभारुण्डाः प्रासादं बीजमेव च ।
पाशमङ्कुशबाण्यौ च तारं हृद्वह्निवल्लभा ॥
हाटकेश्वरि तदनु वेदादिः पाशमेव च ।
वाणीह्रीकमलाश्चैव शक्ति सौपर्णि तत्परं ॥
कमलासने समुच्चार्य्य उच्चाटयद्वयं ततः ।
विद्वेषयद्वयञ्चैव क्रोधास्त्रं वह्निसुन्दरी ॥
शक्ति सौपर्णि तदनु तारवाण्यौ त्रपा ततः ।
कमलाकामरूपश्चैव योगिना कामिनी ततः ॥
शाकिनी डाकिनी चैव प्रलयः फेत्कारी तथा ।
मणिमेखला तदनु हारसानू ततः परं ॥

भगवति महामारि जगदुन्मूलिनि ततः ।
कल्पान्तकारिणि तदा शिरोनिविष्टवामचरणे ॥
दिगम्बरि ततः पश्चात् समर्येति ततः परं ।
ततः कुलचक्रचूडालये मां रक्ष रक्षेति ॥
आहियुग्मं पालय[१०० क]युगं प्रज्वलदावानलेत्यपि ।
ज्वालाजटालजटिले ततो हूंत्रयमाहरेत् ॥
हृदयं वह्निजाया च महामारि ततः परं ।
वेदादिश्च वाणी चैव रक्ताम्बरे तदनन्तरं ॥
रक्तलगनुलेपने महामांसरक्तप्रिये ।
महाकान्तारे तदनु मां आहिद्वन्द्वं ततः परम् ॥
रमाकामत्रपाक्रोधशाकिन्योऽस्त्रं शिरस्तथा ।
मङ्गलचण्डि तदनु मायास्त्रं हृदयन्तथा ॥
चण्डोग्रकालिनि ततः परमशिवशक्ति हि ।
सामरस्य ततः पश्चान्निर्वाणदायिनि ततः ॥
नरकङ्कालधारिणि ब्रह्मविष्णुकुणपवाहिनि ।
वाणी वेदशिरश्चैव शाकिनी तदनन्तरं ॥
ततः प्रत्यक्षं परोक्षं मां द्विषंति ये तानपि ।
हनयुग्मं नाशययुग्मं कुष्माण्डडाकिनी तदा ॥
स्कन्दवेतालभयं नुदयुग्मन्ततः परं ।
कोकामुखि च तदनु स्वाहा तारं त्रपा ततः ॥
मदनः शाकिनी चैव क्रोधं तारं त्रपा ततः ।
क्रोधबीजन्ततः पश्चात् श्मशानेति वदेत्सुधीः ॥
शिवाचारिण्यै भगवत्यै ज्वालाकाल्यै ततः परं ।
योगिनी कामिनी चैव शाकिनी कालिकापि च ॥

चण्डास्त्रहृत्शिरसो ज्वालाकालि तथापरं ।
वाणी च कमलाकामपाशांकुशाञ्च कालिका ॥
अतिचण्डं योगिनी च कामिनी तदनन्तरं ।
ततो घोरनादकालि सिद्धिं मे देहि तत्परं ॥
सर्व्वम्विघ्नमुपशमय सिद्धिकरालि तथापरं ।
ततः सिद्धिविकरालि क्रोधयुगं वदेत्ततः ॥
फट्स्वाहाघोरनादकालिपदं माया ततः ।
क्रोधं च शाकिनी चैव डाकिनी योगिनी तथा ॥
उ[१०० ख]ग्रकाल्यै खेचरीसिद्धिदायिन्यै ततः परं ।
परापरकुलचक्रनायिकायै वदेत्ततः ॥
अमृतं गारुडं चैव कामिनीक्षेत्रपालिनौ ।
कन्दर्पस्त्रिशूलध्र्कारिण्यै नमः स्वाहा ततः ॥
उग्रकालि ततः पश्चात्प्रासादं प्रेतमेव च ।
आदित्यौकारयुक्तश्च काली माया ततः परम् ॥
शाकिनीचण्डरुपश्चैव चास्त्रं वेतालकालि ह्रिं ।
कमला भुवनेशी च वाणीमन्मथकालिकाः ॥
भगवति संहारकालि ब्रह्माण्डञ्च पिषद्वयम् ।
चूर्णययुगलं मां रक्षद्वयं ततः परम् ॥
कालघनरुपश्चैव क्रोधास्त्रद्वितयं पुनः ।
हृदयं वह्निजाया च संहारकालि तत्परं ॥
तारवाग्भवमायाश्च रमा मीनध्वजस्ततः ।
महाघोरविकटरुपायै तदनन्तरम् ॥
ज्वलदनलवदनायै सर्व्वज्ञतासिद्धिदायै ।
कालीशाकिनीक्रोधास्च हृदस्त्रं वह्निसुन्दरी ॥

रौद्रकालि ततः पश्चात् शाकिनीबीजमुत्तमं ।
चण्डाट्टहासिनि ततो डाकिनी तदनन्तरं ॥
ब्रह्माण्डमर्द्दिनि ततः प्रलयश्च ततः परं ।
ब्रह्मविष्णुशिवभक्षिणि तत्परं स्मृतं ॥
फेत्कारी मृत्युमृत्युप्रदायिनि तत्परम् ।
नक्षत्रकूटं तदनु भक्तसिद्धिविधायिनि ॥
सम्बुद्धिपदमुच्चार्य्य कूटम्वाराहिकं ततः ।
भगवति कृतान्तकालि तदनु क्रोधमस्त्रकं ॥
कुण्डलाख्यन्ततः कूटं हृदस्त्रवह्निवल्लभाः ।
कृतान्तकालि तदनु तारवाणीरमास्मराः ॥
शाकिनी कालिका चैव योगिनी कामिनी तथा ।
क्रोधं भीमकालि च कालीद्वयन्ततः परं ॥
महाक्रोधं गारुडं च पन्नगस्तदनन्तरम् ।
[१०१ क] प्रेतशिवपर्य्यंकशायिनि पदमेव च ॥
महाभैरवविनादिनि पदमेतत्ततः परं ।
पशुपाशं मोचय मोचयेति वदेत्सुधीः ॥
कामिनी शाकिनी चैव खेचरी चण्ड एव च ।
चण्डकालि क्रोधबीजं फट्द्वयं तदनन्तरं ॥
चण्डकालिपदञ्चैव औकारस्थो दिवाकरः ।
दक्षश्च ब्रह्मभारुण्डो कलाबीजमतः परं ॥
धनकालि धनप्रदे धनं मे देहि दापय ।
कालिकाशाकिनीक्रोधास्ततोविषधरेत्यपि ॥
वज्रिणि कामबीजञ्च रमाहृद्वह्निवल्लभाः ।
धनकालि ततः पश्चात्तारभूतौ ततः परं ॥

सुदीर्घंकूटन्तदनु मेघो विद्युत्ततः परम् ।
घोरकालि ततः पश्चाद्विश्वं वशीकुरु ततः ॥
पुनर्व्वशीकुरु सर्व्वकार्य्यं साधय द्वयमेव च ।
करालि विकरालि वै योगिनीस्त्री च शाकिनी ॥
प्रेतारूढे प्रेतावतंसे त्रपारमास्मरस्तथा ।
राजानन्तदनुस्मृत्य मोहययुगलन्ततः ॥
क्रोधास्त्रहृदयाश्चैव घोरकालि ततः परम् ।
वाणी त्रपा रमा कामा योगिनी कामिनी तथा ॥
शाकिनीकालिकास्त्रे च द्विठः संत्रासकालि वै ।
कालीयुग्मं मायायुग्मं क्रोधयुग्मं ततः परं ॥
लेलिहानरसनाकराले तदनन्तरं ।
रिंख्यमानसजीवशिवानक्षत्रमाले च ॥
योगिनीस्त्री शाकिनी च प्रेतकालि ततः परं ।
भगवति भयानके मम भयन्ततः परं ॥
अपनय ततः स्वाहा प्रेतकालि ततः परम् ।
तारवाणीत्रपाक्रोधा रतिरानन्द एव च ॥
खेचरी च गौरी चैव शाकि[१०१ ख]नी प्रलयकालि वै ।
प्रलयकारिणि ततो नवकोटि ततः परं ॥
कुलाकुलचक्रेश्वरि दानवःकूर्म्म एव च ।
ग्लूंकारं ग्लैंकारञ्चैव द्रावणञ्च ततः परम् ॥
परमशिवतत्वसमयप्रकाशिनि च ।
विन्दुद्वयान्वितम्बीजं जयाख्यं तदनन्तरम् ॥
अस्त्रस्वाहा तदनु प्रलयकालि तथा परं ।
पाशकालीकामरमावाग्भवाश्च ततः स्मृताः ॥

विभूतिकालि तदनु सम्पदं मे पुनस्तथा ।
वितरद्वयं सौम्या भव वृद्धिदा ॥
भवसिद्धिदा भवेति च जयद्वयं तथापरम् ।
जीवद्वंद्वं च अंबीजं कापालदक्षनेत्रकौ ॥
मानसं चैव स्थाणुञ्च पविरेंकारमेव च ।
भारुण्डं ठद्वयं चैव फट्कारत्रयमेव च ॥
हृदयं वह्निजाया च तारत्रयमतः परं ।
विभूतिकालि तदनु तारांकुशनपास्ततः ॥
स्मरश्च योगिनी चैव शाकिनीस्त्रीरमास्तथा ।
वाग्भवं जयकालि वैं परमचण्डे ततः परं ॥
महासूक्ष्मविद्यासमयप्रकाशिनि तथा परं ।
क्षींकारं प्लुंकारञ्चैव व्फ्लुंकारं तदनंतरं ॥
हृद्वह्निपत्नी तदनु जय कालि ततः परम् ।
वाग्भवं कमला चैव वेदमस्तकमेव च ॥
गुरुभिरन्वितं बीजं फ्रंकारं सप्त चोद्धरेत् ।
भोगकालि ततः पश्चात् फेत्कारी तदनन्तरं ॥
त्रेताबीजं फट्त्रयं च स्वाहा भोगकालि ततः ।
क्रोधञ्च हृदयञ्चैव कल्पान्तकालि तत्परम् ॥
भगवति भीमरावे कान्तं पान्तस्थमेव च ।
रेफसंस्थं चान्तवर्णं वामकर्णं विभूषितम् ॥
तदन्ते विनियोज्यैवं नादविंदुसमन्वितम् ।
इ[१०२ का]न्द्रारूढो मकारादिवामनेत्रविभूषितम् ॥
नादविन्दुसमायुक्तं द्वितीयं बीजमुद्धरेत् ।
पपंचमो वह्निसंस्थो वामनेत्रेण भूषितः ॥

सनादं तार्त्तीयबीजं मेघमाले ततः परं ।
महामारीश्वरि ततो विद्युत्कटाक्षे ततः परम् ॥
अरूपे बहुरूपे च विरूपे च ततः परम् ।
ज्वलितमुखि तदनु चण्डेश्वरि तथापरं ॥
सानुः द्रावणः स्वाहा च कल्पान्तकालि तत्परम् ।
तारञ्च योगिनी चैव क्ष्वेडं वामाक्षिसंयुतं ॥
कला ब्लंकारञ्च डामरमुखि तत्परं ।
वज्रशरीरे तदनु क्रोधबीजं ततः परं ॥
सन्तानकालि तदनु फट्कारं द्विठमेव च ।
पुनर्म्मन्थानकालि च तारबीजं त्रपा ततः ॥
क्रोधबीजं धर्म्मकूटं कूटं कुन्दाख्यमेव च ।
ततो धैहायसीकूटं वायवीयकूटं ततः ॥
भारुण्डाख्यं ततः कूटं दुर्ज्जयकालि तत्परम् ।
हट्टायुधधारिणि वज्रशरीरे ततः परम् ॥
इष्टिबीजं सानुबीजं भारुण्डस्थो नलस्तदा ।
कालविध्वंसिनि ततः कुलचक्रराजेश्वरि ॥
सर्व्वैश्च गुरुभिर्य्युक्तं स्त्रीबीजं नव चोद्धरेत् ।
फट्द्वयं वह्निजाया च दुर्ज्जयकालि तत्परम् ॥
वाणीपाशकलावामकर्णमायारमास्मराः ।
क्रोधं घोराचाररौद्रे महाघोरवाडवेति ॥
सन्धिङ्कलवा ततोऽग्निञ्च ग्रसद्वयमतः परम् ।
महाबले महाचण्डयोगेश्वरि नमो द्विठः ॥
कालकालि ततो वाणी चामुण्डा तदनन्तरम् ।
ततः पश्चाद्विरिञ्चिश्च महारुद्रान्तमस्तकः ॥

ततः पयोबीजं वज्रकालि महाबले ।
घृतबीजन्त[ १०२ ब ]तः पश्चात्तारसिंहन्ततः परं ॥
पद्मो महाप्रपञ्चरूपे दीपिकानलमित्यपि ।
पतयुग्मं फेरुमुखि ततः पश्चाच्छृणुष्व मे ॥
योगिनी डाकिनी खेचरी भूचरी सुरूपिणी ।
तदनु चक्रसुन्दरि महाकालि तथापरं ॥
कापालि तदनुस्मृत्य च मध्यं वह्निबीजकं ।
कलाबिंदुयुतं स्मृत्वा तान्तस्य च तथैव च ॥
मणिमेखला तदनु कहद्वयं(त)ततः परम् ।
त्वां प्रपद्ये तुभ्यन्नमः स्वाहा वज्रकालि ततः ॥
तारमंचत्रपालक्ष्मीस्मरास्तथा शृणुष्व मे ।
ततः सिद्धियोनि महाराविणि तदनन्तरं ॥
ततः परमगुह्यातिगुह्यमङ्गले ततः परं ।
विद्याकालि ततस्त्वष्टा लाङ्कुलं काकिनी ततः ॥
उदुम्बरसुदर्शनी चान्तस्थः कान्त एव च ।
नदवामकर्णयुक्तं रान्तस्थः काल एव च ॥
असुरो योगिनी चैव धीवरी च स्वरूपिणी ।
तथैव शवरी पीवरी च तथा शृणु ॥
चण्डिके भक्षिके तदनु रक्षिके तदनन्तरम् ।
हर्षबीजं ततः पश्चादहर्षन्तदनन्तरम् ॥
ठत्रयं फट्त्रयञ्चैव नमः स्वाहा ततः परम् ।
विद्याकालि ततः पञ्चात्तारपाशकलास्तथा ॥
वाणी भारुण्डकापाला श्रीं खूं क्रें म्लौं तथा ।
कान्तचान्तचकारान्ता वह्निभारुण्डाश्च पार्वति ॥

षष्ठस्वरसमायुक्ता नादबिंदुविभूषिता ।
समध्यं रेफबीजन्तु कलाबीजसमन्वितं ॥
चतुर्द्दशस्वरोपेतं यान्तं बिंदुविभूषितं ।
मीं बीजं तदनुस्मृत्य स्वाहाशक्तिकालि ततः ॥
तारं च फेत्कारीकूटं हृदयन्तदनन्तरम् ।
चण्डातिच[ १०३ क ]ण्डे तदनु मायाकालि ततः परं ॥
कालवंचनि तदनु महांकुशे ततः परं ।
नन्दनाख्यं ततः कूटं पातालनाग चेत्यपि ॥
वाहिनि गगनग्रासिनि ब्रह्माण्डनिष्पेषिणि ततः ।
हूं त्रयञ्च मनस्त्रयं क्रोधत्रयं ततः परं ॥
तारं माया क्रोधं चैव चामुण्डा डाकिनी ततः ।
महाचण्डवज्रिणि च भ्रमरि भ्रामरि ततः ॥
महाशक्ति ततश्चक्रकर्त्तरी तदनन्तरम् ।
कुलार्णवचारिणी च फिंकारं फांकारं ततः ॥
फें फूं फौं समयेति विद्यागोपिनि तत्परं ।
किरिटी ताण्डवी हंसी कूटत्रयमतः परम् ॥
महाकालि ततः पश्चात् समयलाभन्ततः परं ।
कुरुद्वन्द्वं ततो विद्यां प्रकाशयद्वयन्ततः ॥
सिद्धो माया चण्डबीजं धर्म्मबीजं तथा परं ।
ह्लीं बीजं च जयोबीजं गौरीबीजं तथैव च ॥
अस्त्रञ्च वह्निपत्नी च महाकालि ततः परं ।
वाग्भवश्च ततः पश्चात्परापरेति संवदेत् ॥
रहस्यसाधिके ततः कुलकालि ततः परम् ।
शाकिनी योगिनी चैव कामिनी ह्लीरयस्तथा ॥

स्मरामृतं लाङ्गुलञ्च भस्थः क्षेत्रपाली ततः ।
विदुद्वयेन संयुज्य त्र्यस्त्रं तत्र चाहरेत् ॥
कुलकालि ततः पश्चात्तारमायास्मरास्तथा ।
क्रोधश्च शाकिनी चैव परापरपरमेत्यपि ॥
रहस्यकाली कुलक्रमपरम्पराप्रचारिणि ततः ।
भगवति नादकालि करालरूपिणि ततः ॥
मनःकूटं शाकिनी च डाकिनी प्रलयस्तथा ।
फेत्कारीबीजन्तदनु मम शत्रूनिति वदेत् ॥
मर्द्दययुगलञ्चैव चूर्णययुग्ममेव च ।
पातयद्व[१०३ ब]न्द्वं नाशययुगं भक्षयद्वितयं तथा ॥
खेचराख्यं महाकूटं पावित्राख्यं ततः परं ।
कूटं गजघटाख्यं हि शृङ्खलाकूटमेव च ॥
दण्डाख्यकूटं तदनु नवकोटि ततः परं ।
कुलाकुलचक्रेश्वरि ततः पश्चाद्वदेत्सुधीः ॥
सकलगुह्यानन्ततत्त्ववारिणि तदनन्तरं ।
कूँ चूँ टूँ तूँ पूँ मां कृपय द्वितयं तथा ॥
त्रपा क्रोधं शाकिनी च योगिनी कामिनी तथा ।
अस्त्रं च वह्निपत्नी च नादकालि ततः परम् ॥
तारं च शाकिनी चैव चतुरशीति तत्परं ।
कोटिब्रह्माण्ड तदनु सृष्टिकारिणि तत्परं ॥
प्रज्वलज्ज्वलनलोचने वज्रसमदंष्ट्रायुधे ।
दुर्न्निरीक्षाकारे तदनु भगवति ततः परं ॥
मुण्डकालि ततः पश्चात् कहद्वन्द्वं तुरुद्वयं ।
दमयुग्मं चटयुग्मं प्रचटयुगलन्ततः ॥

हरिहराख्यं तत्कूटं कूटं कूटाख्यमेव च ।
पत्रकूटं ततः पश्चात्सर्व्वसिद्धिं देहि द्वयं ॥
सर्व्वैश्वर्य्यं तदनु दापययुगलन्ततः ।
विद्युदुज्ज्वलजटे वै विकटसटे च ततः ॥
महाविकटकटे च त्रपाकामक्रोधास्तथा ।
योगिनी कामिनी चैव शाकिनी हृदयं द्विठः ॥
मुण्डकालि ततः पश्चात्तारं वाग्भव एव च ।
पाशरमाकामत्रपामहाक्रोधास्ततः परं ॥
ततो दक्षस्तथा स्ह्फ्यूं चञ्चोंकारं क्वींकारं तथा ।
धूमकालि ततः पश्चात्सर्व्वमेवेति तत्परं ॥
मे वशञ्च कुरुद्वन्द्वं पाहियुग्ममतः परं ।
जम्भिके करालिके ततः पूतिके घोणिके ततः ॥
खत्रयमस्त्रहृदये धूमकालि ततः परं ।
वाण्यङ्कुशौ शाकिनी च योगि[ १०४ क ]नी काम एव च ॥
आज्ञाकालि ततः पश्चान्ममाज्ञां राजान इत्यपि ।
ततः शिरसा धारयन्तु क्रोधमस्त्रशिरस्तथा ॥
ततः परमाज्ञाकालि तारत्रपे तथैव च ।
चण्डबीजं ड्रींकारं च ड्रंकारं तिग्मकालि च ॥
तिग्मरूपे तिग्मातितिग्मे भ्रमं मोचयेत्यपि ।
स्वं प्रकाशय स्वाहा तिग्मकालि ततः परम् ॥
तारं वाणी त्रपाचैव योगिनी कामिनी तथा ।
शाकिनी कमला कामक्रोधस्तथामहाकालि ॥
लेलिहानरसनाभयानके ततः परम् ।
घोरतरदशनचर्व्वितब्रह्माण्डे ततः ॥

चण्डयोगेश्वरीशक्तितत्वसहिते ततः ।
शां जां डां दां रां प्रचण्डचण्डिनि सद्यो धनं ततः ॥
महामारी सहायिनि भगवति भयानके ।
चामुण्डा योगिनो ततो डाकिनी शाकिनी तथा ॥
भैरवीमातृगणमध्यगे तदनन्तरम् ।
जयद्वन्द्वं कहयुग्मं हसद्वयं ततः परम् ॥
प्रहसयुगलं जम्भयुग्मं तुरयुगं तथा ।
श्मशानद्वयं शानवासिनि तदनन्तरम् ॥
शववाहिनि नरमांसभोजिनि ततः परम् ।
कङ्कालमालिनि ततः फेंकारत्रयमेव च ॥
तुभ्यं नमो नमः स्वाहा महारात्रिकालि ततः ।
फेत्कारी च भगवति संग्रामकालि तत्परम् ॥
संग्रामे जयमेवोक्त्वा देहियुग्मं वदेत्ततः ।
मां द्विषतो मम वशे कुरुद्वयं स्मरेत्सुधीः ॥
पां पीं पूं पैं पौं ततश्च ज्वलद्वयं ततः परं ।
प्रज्वलद्वितयं चैव विद्युत्केशि ततः परम् ॥
पातालनयनि तदा ब्रह्माण्डोदरि तत्परम् ।
महोत्पातं प्रशमययुगं मायाक्रोधौ ततः ॥
योगि[१०४ ख]नी कामिनी चैव शाकिनी हृदयं द्विठः ।
संग्रामकालि तदनु वाग्भवः शाकिनी तथा ॥
योगिनी क्रोधः क्षेत्रपालीबीजं ततः परं ।
नक्षत्रनरमुण्डैर्तिमालालङ्कृतायै तदा ॥
चतुर्द्दशभुवनसेवितपादपद्मा ङेन्ता ।
भगवत्यै शवकालिकायै ततः परं शृणु ॥

यकारादिक्षकारान्ता वामकर्णविभूषिताः ।
नादविंदुसमायुक्ता नवबीजानि चोद्धरेत् ॥
दुष्टग्रहनाशिन्यै च शुभफलदायिन्यै च ।
रुद्रासनायै तदनु सानुबीजं समाचरेत् ॥
समेखलाजलञ्चैव हूं खं वारत्रयं वदेत् ।
क्रोधत्रयं ठान्तत्रयं फट्त्रयं हृदयं द्विठः ॥
शवकालि ततः पश्चाद्वाणी त्रपा तथापरम् ।
सर्व्वदार्घयुतं ऋञ्च नादविन्दुसमन्वितं ॥
पूर्व्वसंव्यवेहीनं नादहीनन्तथा प्रिये ।
क्रमेणषष्ठबीजानि वह्निस्थः क्षेत्रपस्तथा ॥
वमदग्निमुख ततः फेत्कोटिपरिवृते ।
विलस्तजटाभारे च भगवति तथैव च ॥
नग्नकालि ततः पश्चाद्रक्ष पाहि द्वयं द्वयं ।
परमशिवपर्य्यङ्कनिवासिनि तथोच्चरेत् ॥
क तृतीयचतुर्थौ च वह्निसंस्थौ कलान्वितौ ।
एवञ्च पञ्चवर्ग्गाणां बीजानां दश चाहरेत् ॥
विकरालमूर्त्तिततामुपहृत्येति तत्परं ।
दर्शय क्रोधहृदयन्नग्नकालि ततः परम् ॥
पाशाङ्कुशवाग्भवाश्च प्रेतबीजन्तथापरम् ।
सर्ग्गहीनं प्रेतबीजं नस्थं नादकलान्वितं ॥
आनन्दबीजं तदनु हूंकारं त्रिकूटा ततः ।
क्रों रुधिरकालिकायै निपीतेतिस्मरेत्ततः ॥
बालनररुधिरायै त्व[१०५ क]गस्थिचर्म्मा ततः परम् ।
वशिष्ठायै महाश्मशानधावनप्रचलित ॥

पिंगजटाभाराये च नारसिंह ततः परं ।
थ्रीं च्रीं फ्रीं खूीं ममाभीष्टसिद्धि ततः ॥
देहिद्वन्द्वं वितरयुगलं क्रोधमेव च ।
डाकिनि राकिनि चैव शाकिनि काकिनि तथा ॥
लाकिनि हाकिनि चैव सद्यो धन नि चोद्धरेत् ।
नररुधिरं च ततः पिवद्वयं ततः स्मृतम् ॥
महामांसं खाद खाद वाग्भवं तारमेव च ।
रमात्रपाकामक्रोधाः शाकिनीयोगिनी ततः ॥
कामिन्यस्त्रं द्विठश्चैव रुधिरकालि तत्परं ।
कालीबीजं करङ्कधारिणि तदनन्तरम् ॥
कङ्कालकालि तदनु प्रसीदयुगलं ततः ।
विद्यामावाहयामि तवाज्ञया ततः परं ॥
समागत्य मयि चिरं तिष्ठन्तु द्विठ एव च ।
कङ्कालकालि तदनु तारवाणीरमास्तथा ॥
पाशकर्णत्रपाकामक्रोधशाकिन्य एव च ।
अतिचामुण्डा कर्णों चैव भगवति ततः परं ॥
भयङ्करकालि ततस्त्रैलोक्यदुन्निरीक्ष्य च ।
रूपे तदनुसंभाष्य नवकोटि भैरवी च ॥
ततश्चामुण्डाशतकोटिपरिवृते ततः परम् ।
तदनु मम द्विषतो हन मथ द्वयं द्वयं ॥
पंचयुग्मं विद्रावययुगं पातय चेत्यपि ।
निःशेषययुगञ्चोक्त्वा सानुबीजं ततः परं ॥
सर्व्वदीर्घयुतेनैव पूर्व्वसन्ध्यक्षरे हीनं ।
विन्दुसर्गविहीनञ्च ततश्च हृदयास्त्रके ॥

भयंकरकालि ततस्तारत्रपारमास्मराः ।
योगिनी कामिनी चैव शाकिनी भस्मली तथा ॥
पाशहीनं भस्मबीजं षष्ठस्वरवि[१०५ ख]भूषितं ।
तदेव वाग्भवयुतं ततः पश्चाद्विनिर्द्दिशेत् ॥
वह्निः पान्तन्तथावान्तञ्चतुर्द्दशस्वरो युतः ।
सबिन्दुं बीजमुच्चार्य्य कर्णिका तदनन्तरम् ॥
पपञ्चमं च रेफस्थं मेखलाबीजमेव च ।
मेखला च ततः पश्चाद्वह्निपत्नी ततः परम् ॥
फेरुकालि तदन्ते च वाणीक्रोधी ततः परं ।
प्रचण्डचक्षिवितती विकटकालि ततः परं ॥
फां फीं फूं मुञ्जयुग्मं बलायुग्मं ततः परं ।
त्रुटयुग्मं हृदयञ्च द्विठो विकटकालि ततः ॥
जयक्रोधी आये माये तायें प्रचण्डचण्डे वैं ।
रक्षिणि भक्षिणि चैव दक्षिणि द्विठ एव च ॥
करालकालि तदनु प्रणगः (वः?) शाकिनी तथा ।
सर्व्वाभयप्रदे चैव सर्व्वसम्पत्प्रदे तथा ॥
चटिनिर्वाटिनि चैव कटिनि च स्फुरद्वयं ।
प्रस्फुरयुगलञ्चैव ग्रां ग्रीं ग्रूं चैवग्रौं ग्रः नमः स्वाहा तथा ॥
शाकिनी डाकिनी चैव तारं वाणी ।
ततः पाशाङ्कुशकालिकाश्च रमामायास्मरास्तथा ॥
क्रोधञ्च योगिनी चैव कामिनी शाकिनी तथा ।
ध्रींकारं च त्रशक्तिच क्षमाकुष्माण्डी तत्परम् ॥
घोरघोरतरकालि ब्रह्माण्डबर्हिणि ततः ।
निर्गतमस्तकेतवा जटाविधूननेत्यपि ॥

चकिततपोलोके ज्वालामालिनि तत्परं ।
संमोहिनि संहारिणि सन्तारिणि ततः परं ॥
क्लाँ क्लीँ क्लूँ क्लिं चोक्त्वा गृह्ण खादय युगं युगं ।
भक्षद्वयं ततः सिद्धिं देहिद्वयं ततः परम् ॥
मम शत्रूनितिस्मृत्य नाशययुगलं ततः ।
मथयुग्मं विद्रावययुगलं तदनन्तरं ॥
मारययुगं[१०३ क]स्तंभययुगं जंभययुगलं ततः ।
स्फोटययुगं विध्वंसययुगलं परिकीर्त्तितम् ॥
उच्चाटययुगं चापि हर तुरु युगं युगं ।
दमयुग्मं मर्द्दयुग्मं भस्मीकुरुयुगन्तथा ॥
सर्व्वभूतभयंकरि सर्व्वशत्रुक्षयंकरि ।
शाकिनी डाकिनी चैव प्रलयः फेत्कारी तथा ॥
ततः सर्व्वजनसर्व्वेन्द्रियहारिणि तत्परं ।
त्रिभुवनमारिणि च संसारतारिणि ततः ॥
स्फें स्फाँ ज्रौं क्ष्रौं चैव—म्लें क्लीँ व्लीँ तथा ।
श्रीं प्रसीद भगवति नमः स्वाहा ततः परं ॥
मायाक्रोधञ्च–का–मञ्च योगिनी तदनन्तरं ।
घोरघोरतरकालि ततोनु भुवनेश्वरी ॥
शाकिनी चाङ्कुशं चैवामृतञ्च योगिनी तथा ।
कामिनीक्रोधभूताश्च डाकिनी प्रलयस्तथा ॥
फेत्कारी चामुण्डा चैव प्रेतवीजं ततः परम् ।
अस्त्रं शिरः कामकलाकालि ततः परं शृणु ॥
डाकिनी सानुवीजञ्च तुङ्गश्चूडा ततः परं ।
मणिमेखलावलिजञ्चैव जलञ्च तदनन्तरं ॥

सभोगोऽस्त्रं कामकलाकालि तथापरञ्चरुट् ।
अस्त्रञ्चशाकिनी चैव कामकलाकालिका च ॥
ङेन्ता नमः शिरः पश्चात्कामकलाकालि ततः ।
तारं वाणी योगिनी च शाकिनी स्मर एव च ॥
कामिनीभूतरुपश्चैव क्रीं कामकलाकालि ततः ।
अंकुशं भूतवीजञ्च शाकिनी डाकिनी ततः ॥
क्रोधं कामकलाकालि मन्मथः कालिका ततः ।
क्रोधांकुशौ तथा भूतं कामकलाकालि ततः ॥
भूताङ्कुशौ क्रोधवीजं कालीस्मरः शिरस्तथा ।
ततः कामक[१०६ ख]लाकालि संबोधनपदन्ततः ॥
ततः सर्व्वशक्तिमयशरीरे तदनन्तरं ।
ततः सर्व्वमंत्रमयविग्रहे तदनन्तरं ॥
महासौम्यमहाघोररूपधारिणि तत्परम् ।
भगवति कामकलाकालि संबोधनपदम् ॥
हरपत्नी हरिजाया मन्मथो वाग्भवस्तथा ।
पाशांकुशक्रोधाश्चैव योगिनी कामिनी ततः ॥
शाकिनी डाकिनी चैव चामुण्डा तत एव हि ।
यक्षवीजं मेखला च पयःसानू ततः परं ॥
भाषाख्यकूटं तदनु कूटं वाराहिकं ततः ।
अश्वमेधं ततः कूटं कूटञ्च शांभवं ततः ॥
पाशुपतं ततः कूटं क्रोधत्रयं ततः परम् ।
अस्त्रद्वयं हृदयं च वह्निजाया ततः परं ॥
इति ते कथितो देवि प्राणायुताक्षरी मया ।
देव्याः कामकलाकाल्याः सर्व्वसिद्धिप्रदायिका ॥

